epithets. Then calling to mind Śiva as Rudra and lord of crematoria, fried rice (*lāja*) is scattered in his name. Then, ten libations of water mixed with *tila seed* are made to the three ancestors and their wives, and ten balls of rice (*piṇḍa*) are offered, nine to them and the tenth libation and *piṇḍa* being to himself. He should throw into the water ten pots (*kumbha*) of water mixed with *tila*. He should then come back to his house, sprinkling milk on *darbha* spread near the door-step, and sleep with his head *facing* south. Next day, (*amāvāsyā* or new moon) he should do the *masīka-śrāddhas* and the *sapiṇḍīkāraṇa* (Note—it is condemned above). The period should be observed as one of impurity (*āśauca*) by relations. The word *preta* is however to be avoided in every part of the ritual of this ceremony (*Śrāddhamayūkha* ed. Gujarathi Press, p. 160).

# ॥ कृत्यकल्पतरुः ॥

॥ श्रीलक्ष्मीधरविरचितः ॥

## ॥ श्राद्धकाण्डम् ॥

### ॥ मङ्गलाचरणम् ॥

॥ श्रीगणेशाय नमः ॥

यः पुण्यात्मा धिनोति प्रतिदिनममितैर्हन्तकारैर्मनुष्या-
न्कव्यैरव्याजभव्यैः पितृगणममरस्तोममस्तोकहव्यैः ।
श्रीनाथध्यानसिन्धुस्रवणसुखरसोपेतचेतोमरालः
सः श्रीलक्ष्मीधरोऽयं विरचयति सुधीः श्राद्धकाण्डं चतुर्थम् ॥

### ॥ प्रतिज्ञा ॥

श्राद्धस्वरूपं तद्भेदाः काला देशास्ततः परम् ।
हविष्याणि विवर्ज्यानि ब्राह्मणानां परीक्षणम् ॥
पङ्क्तीनां पावना वर्ज्या अपाङ्क्तेया निमन्त्रणम् ।
निमन्त्रितस्य नियमाः श्राद्धमावाहनाग्रतः ॥
श्राद्धसंपद आतिथ्यमपास्यश्च यथाक्रमम् ।
विधीनां परिभाषा च जपासनमुखो विधिः ॥
परिवेषणमन्त्रस्य सङ्कल्पो भोजने विधिः ।
जपादिविधिरत्रापि कर्म श्राद्धोत्तरं क्रमात् ॥

पित्रादीनां स्वरूपं च श्राद्धस्तुतिरनुक्रमात्।
आमश्राद्धं तथा जीवत्पितृकश्राद्धमेव च॥
अथ द्विपितृकश्राद्धमेकोद्दिष्टमनन्तरम्।
सपिण्डीकरणश्राद्धं श्राद्धं तत्करणोत्तरम्॥
श्राद्धाधिकारिणोऽप्यत्र श्राद्धमभ्युदयाश्रितम्।
श्राद्धं जीवत एवात्र कथ्यते तदनन्तरम्॥
लक्ष्मीधरेण कृतिना नानामुनिवरोक्तिभिः।
द्वात्रिंशत्पर्वणामेवं श्राद्धकाण्डे निरुच्यते॥

## ॥ १ ॥

# ॥ अथ श्राद्धस्वरूपम् ॥

अथ श्राद्धकल्पः ।

तत्र हारीतः [अ. १२]

अथातः श्राद्धकल्पं व्याख्यास्यामः । संवत्सरः प्रजापतिः । तस्योदगयनं शुक्लोऽहः पूर्वाह्णश्च । तद्देवानाम् । दक्षिणायनं तामिस्रो रात्रिः अपराह्णश्च । तत् पितॄणाम् । नान्यभावः कृत्स्नभावादुभयथा इज्यन्ते । व्यामिश्रत्वादहरहः । अथाप्यत्रोदाहरन्ति—यस्येमे वर्त्मनी हव्यकव्ये वहतो देवा यस्यार्धं, पितरोऽर्धं तथैव निमेषा यस्य मूलं, तं ऋतवो वै यजन्तममृतत्वमियात् ॥

शुक्लश्च तामिस्रश्च पक्षौ । यस्माद्देवानां पितॄणां चैवं विभक्तः कालः, तस्मात् कृत्स्नस्य कालस्यानेनैव प्रकारद्वयेन संगृहीतत्वात्, 'नान्यभावः' नान्यथात्वं, तद्व्यामिश्रत्वात् पूर्वाह्णापराह्णादिभेदेन । 'अहरहरुभयथापि इज्यन्ते' प्रकारद्वयेन पूर्वाह्णापराह्णादिभेदेन । 'इमे वर्त्मनी' देवयानपितृयानाख्ये । एतस्मादर्थवादवाक्यात् सामान्यतः श्राद्धकर्तव्यताविधिः कल्प्यते ॥[1]

(1) योऽसौ प्रजापतिर्नाम देवताविशेषः श्रूयते स एवायं सांवत्सरात्मकः कालः । तस्यैतस्य भागद्वयं भवति । तत्रोदगयनं शुक्लोऽहः पूर्वाह्ण इत्येको भागः । अहर्दिनम् । तदेतत्संवत्सरावयवजातं देवानाम् । दक्षिणायनं संवत्सरावयवजातं पितॄणाम् । अत्र पित्र्यं कर्म कर्तव्यमित्यर्थः । 'तं' संवत्सरं प्राप्य यथाविभागं देवांश्च पितॄंश्च यजन्तं पुरुषममृतं मोक्षादिफलाभिमुखेन 'इयात्' आगच्छतीत्यर्थः । इति दैवपितृविभागेन कालनिर्णयः ॥ (हेमाद्रिः, १६६—१६७)

श्राद्धस्वरूपं च आपस्तम्बेन व्यक्तमुक्तम्। यदाह आपस्तम्बः [२, १६, १-४]

अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच। प्रजानिःश्रेसार्थं [च]। तत्र पितरो देवता ब्राह्मणस्त्वाहवनीयार्थे। मासि मासि कार्यम्। अपरपक्षस्याऽपराह्णः श्रेयान्॥ इति

'श्राद्धशब्दं' श्राद्धमिति 'शब्दो' वाचको यस्य तत्तथा। 'ब्राह्मणस्त्वाहवनीयार्थे' आहवनीयवद्व्यक्तद्रव्यप्रतिपत्तिस्थानत्वेन। एतेन पितॄनुद्दिश्य द्रव्यत्यागो ब्राह्मणस्वीकरणपर्यन्तं श्राद्धस्वरूपं प्रधानमित्यर्थादुक्तं भवति। अन्यत्र तु दैवश्राद्धादौ श्राद्धशब्दप्रयोगो गौणः तद्धर्मप्राप्त्यर्थः, कौण्डपायिनामयनहोम इवाग्निहोत्रशब्दः। अत्र च पित्रादीनां प्रत्येकं देवतात्वम्, न समुदितानाम्। 'नमो विश्वेभ्यो देवेभ्य इत्यन्नमादौ प्राङ्मुखयोर्निवेदयेत्। पित्रे पितामहाय प्रपितामहाय च नामगोत्राभ्यामुदङ्मुखेषु' इति विष्णुना [७३, १३-१४] प्रत्येकमेवोद्देश्यत्वेनाभिधानात्।

ततो मधुघृताक्तं तु सोष्णमन्नं तिलान्वितम्।
गृहीत्वा देवतीर्थेन प्रणवेनैव तत्पुनः॥
एतद्वोऽन्नमितीत्युक्त्वा विश्वान् देवांश्च संयजेत्।
अमुकामुकगोत्रैतत्तुभ्यमन्नं स्वधा नमः॥

इति ब्रह्मपुराणवचनाच्च। यत्तु 'अमावास्यायां पितृभ्यो दद्यात्' इत्यादिवाक्येषु बहुवचनम्, तन्न प्रमाणान्तरसिद्धप्रत्येकदेवतात्वानुरोधादभिधानक्रियापेक्षम् 'गर्गा भोज्यन्ताम्' इतिवत्। नापि पित्रादेः सपत्नीकस्य देवतात्वम्। तथात्वे प्रमाणाभावात्। प्रत्युत

न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते।
स्वभर्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता ॥

इति शातातपवचने भर्तृसंबन्धिपिण्डभागस्यैव पत्नीतृप्तिहेतुत्वेनाभिधानाद्विपरीतमेव प्रमाणमस्ति ॥

॥ इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्ट-
श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ
श्राद्धकाण्डे श्राद्धस्वरूपम् ॥

## ॥ २ ॥

## ॥ अथ श्राद्धभेदाः ॥

विश्वामित्रः

नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम् ।[1]
पार्वणं चेति विज्ञेयं गोष्ठ्यां शुद्ध्यर्थमष्टमम् ॥
कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम् ।
यात्रास्वेकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं स्मृतम् ॥

विवृतं चैतद् भविष्यपुराणे[2]

अहन्यहनि यच्छ्राद्धं तन्नित्यमिति कीर्तितम् ।
वैश्वदेवविहीनं तदशक्तावुदकेन तु ॥
एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।
तदप्यदैवकं कार्यमयुग्मान् भोजयेद्द्विजान् ॥
कामाय विहितं काम्यभिप्रेतार्थसिद्धये ।
पार्वणेन विधानेन तदप्युक्तं खगाधिप ॥
वृद्धौ यत् क्रियते श्राद्धं वृद्धिश्राद्धं तदुच्यते ।
सर्वं प्रदक्षिणं कार्यं पूर्वाह्णे तूपवीतिना ॥
गन्धोदकतिलैर्युक्तं कुर्यात् पात्रचतुष्टयम् ।
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥
ये समाना इति द्वाभ्यामेतज्ज्ञेयं सपिण्डनम् ।
नित्येन तुल्यं शेषं स्यादेकोद्दिष्टं स्त्रिया अपि ॥

1. श्राद्धचन्द्रिका, ३
2. श्राद्धचन्द्रिका, ४

अमावास्यां यत् क्रियते तत् पार्वणमुदाहृतम् ।
क्रियते वा पर्वणि यत् तत्पार्वणमुदाहृतम्[1] ॥
गोष्ठ्यां यत् क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते ।
बहूनां विदुषां [2]संपत्सुखार्थं पितृतृप्तये ॥
क्रियते शुद्धये यत्तद्ब्राह्मणानां तु भोजनम् ।
शुद्ध्यर्थमिति तत्प्रोक्तं वैनतेय मनीषिभिः ॥
निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमेव च[3] ॥
देवानुद्दिश्य यच्छ्राद्धं तद्दैविकमिहोच्यते ।
हविष्येण विशिष्टेन[4] सप्तम्यादिषु यत्नतः ॥
गच्छन्देशान्तरं यस्तु श्राद्धं कुर्यात्तु सर्पिषा ।
यात्रार्थमिति तत्प्रोक्तं प्रवेशे च न संशयः ॥
शरीरोपचये श्राद्धमर्थोपचय एव च ।
पुष्ट्यर्थमेतद्विज्ञेयमौपचारिकमेव वा ॥

'वृद्धिः' पुत्रजन्मादिः । 'नित्येन तुल्यं शेषं स्यात्' इति तु समन्त्रावश्यकार्यं पार्वणमेकोद्दिष्टं चाभिमतम् । तेनायमर्थः–सपिण्डीकरणस्य चोभयात्मकत्वात् पार्वणांशे पार्वणेन एकोद्दिष्टांश एकोद्दिष्टेन तुल्यं विशिष्टं अङ्गजातं स्यादिति । 'एकोद्दिष्टं स्त्रिया अपि' इति च, अत्रैकोद्दिष्टपदेनैकोद्दिष्टयोगात् सपिण्डीकरणमेवाभिहितं प्रसंगात् स्त्रीसंबन्धेनापि । 'क्रियते वा पर्वणि' इत्यत्र पर्वशब्दः संक्रान्त्यादिपरः । 'गोष्ठी' चात्र श्राद्धकर्तृसमुदायः । 'संपत्सुखार्थं' श्राद्धसामग्रीसंपदा यत्सुखं तदर्थं बहूनां विदुषां केनचिन्निमित्तेन युगपच्छ्राद्धे

1. 'पार्वणमिति स्थितिः' इति श्राद्धचन्द्रिकापाठः
2. 'संपत्सुखार्थं' इति श्रा. च., ६; सम्यक् सुखार्थं—उ.
3. 'कर्माङ्गं श्राद्धमुच्यते' इति श्रा. च.
4. 'विशेषेण' इति श्रा. च.

कर्तव्य उपस्थिते पृथक्पाकाद्यसंपत्तौ संभूय श्राद्ध-सामग्रीसंपादनेन यच्छ्राद्धं क्रियते तद्गोष्ठीश्राद्धमिति शङ्खधरः। 'निषेककाले सोमे च' इत्यादि श्रौतस्मार्तकर्मो-पलक्षणम् । देशान्तरगमने गृहप्रवेशे च यच्छ्राद्धं तत्तीर्थयात्रार्थं देशान्तरगमने तीर्थयात्रां कृत्वा गृहप्रवेशे च बोद्धव्यम् ॥ 'यो यः कश्चित्' इत्यादिब्रह्मपुराण-वचनात् । 'शरीरोपचये' शरीरोपचयहेतौ रसायनादौ कर्तव्ये ।

॥ [1]इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्ट
श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ
श्राद्धकाण्डे श्राद्धभेदाः ॥

1. यो यः कश्चित्तीर्थयात्रां तु गच्छेत् सुसंयतः सुमनाः सुसमाहितः ।
स: पूर्वं स्वगृहे कृतोपवासः संपूजयेद्भक्तिनम्रो गणेशम् ॥
देवान् पितॄन् ब्राह्मणांश्चैव साधून् धीमान् प्रीणन् वितनोति शक्त्या प्रयत्नात् ।
प्रत्यागतश्चाथ पुनस्तथैव देवान् पितॄन् ब्राह्मणान् पूजयेच्च ॥
इति श्राद्धप्रकाशे ब्रह्मपुराणवचनम् । (पृ. ३३३)

## ॥ ३ ॥

## ॥ अथ श्राद्धकालाः ॥

तत्र याज्ञवल्क्यः [१,२१७-२१८]

> अमावास्याष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम् ।
> द्रव्यं ब्राह्मणसंपत्तिर्विषुवत्सूर्यसंक्रमः ॥
> व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः ।[1]
> श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्तिताः ॥

[1]'व्यतीपातः' [योगविशेषः] सूर्याचन्द्रमसोः क्रान्ति-साम्यसमयः । 'गजच्छाया' ब्रह्मपुराणोक्ता ।

> योगो मघात्रयोदश्योः कुञ्जरच्छायसंज्ञकः ।
> भवेन्मघायां संस्थे च शशिन्यर्के करस्थिते ॥ इति

(1) 'अमावास्यादयः' श्राद्धस्याङ्गभूताः काला मन्वादिभिः प्रकीर्तिताः । अत्र अमावास्या कृष्णपक्षस्य पञ्चदशी तिथिः । सा च सिनीवाली कुहूश्चेति द्विविधा । 'दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कुहूस्तथा' । तत्र साग्निकैः सिनीवाल्यां श्राद्धं कार्यमितरैः कुह्वाम् । 'अष्टका' मार्गशीर्षादिमासत्रयापरपक्षाष्टम्यः । तत्र गृह्यकृच्छौनकः—"हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः" [आश्व.गृह्य. २, ४, १] इति । विष्णुस्तु त्रयमेवाह [८६, १] ब्रह्मपुराणे च पुनरष्टकाश्चतस्रः । 'वृद्धिः' विवाहादिः वैदिककर्मगणः पुत्रजन्मादिश्च । 'अयनद्वयं' मकरकर्कटसङ्क्रान्ती । 'द्रव्यब्राह्मणसंपत्तिः' द्रव्यस्य श्राद्धार्हब्राह्मणस्य वा संपत्तिः लाभो यत्र काले स श्राद्धकालः । विषुवे मेषे तुलायां च सूर्यस्य संक्रान्तिः । अयनवदस्यापि पृथग्वचने प्रयोजनम् । 'व्यतीपातो' योगविशेषः । तत्र वृद्धमनुः—"श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके । यद्यमा रविवारेण व्यतीपातः स उच्यते ॥" नागदैवतमाश्लेषा; 'मस्तके' प्रथमपादे, यदि चन्द्रः । गजच्छाया चोक्ता स्मृत्यन्तरे—यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः । तिथिर्वैश्रवणीया च गजच्छायेति सा स्मृता ॥ इति । 'पितृदैवत्यं' मघा; 'हंस' आदित्यः; 'करो' हस्तनक्षत्रम्, 'वैश्रवणीया' त्रयोदशी । ग्रहणं उपरागः । (अपरार्कः ।)

विष्णुः [७६, १-२; ७७, १-६]

अमावास्यास्तिस्रोऽष्टकास्तिस्रोऽन्वष्टकाः माघी प्रौष्ठपद्यूर्ध्वं कृष्णत्रयोदशी व्रीहियवपाकौ चेति ।[1]

एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः ।
श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते ॥

आदित्यसंक्रमणम् । विषुवद्द्वयम् । विशेषेणायनद्वयम् । व्यतीपातः । जन्मर्क्षम्[2] । अभ्युदयश्च ।

[3]एतांस्तु श्राद्धकालान् वै नित्यानाह[4] प्रजापतिः ।
श्राद्धमेतेषु यद्दत्तं तदानन्त्याय कल्पते ॥

'माघी' पौर्णमासी, तथैव समुदायप्रसिद्धेः ।

मनुः [३,११२-११३]

पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् ।
पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम् ॥
पितॄणां मासिकं श्राद्धमन्वाहार्यं विदुर्बुधाः ।
तच्चामिषेण कर्तव्यं प्रशस्तेन प्रयत्नतः ॥

'पितृयज्ञो'ऽत्र पिण्डपितृयज्ञः । 'पिण्डान्वाहार्यकं' पिण्डानामनु पश्चादाह्रियते क्रियते यद्दर्शश्राद्धं तत्तथा । 'मासानुमासिकं' प्रतिमासभवम् ।'पितॄणां मसिकं' इति । मासिकं दर्शश्राद्धं यत् पिण्डानामनु पश्चादाहार्यं कर्तव्यं विदुः बुधा इत्यर्थः । एतेन पिण्डान्वाहार्यकमिति संज्ञाकरणम् । निर्वचनं गुणविधानार्थमुक्तं भवति । 'आमिषेण' प्रशस्तेन खड्गमांसादिना ।

(1) व्रीहिपाकः शरत् । यवपाको वसन्तः (वैजयन्ती)

(2) 'जन्मर्क्षम्' आत्मनः पुत्रस्य भार्यायाश्च जन्मनक्षत्रम् । (वैजयन्ती)

(3) तत्र कृतं श्राद्धं पितॄणां यावच्चन्द्रतारकावस्थानमुपतिष्ठते कर्तुश्च सर्वगुणातिशयवत्सर्वकामसाधनं भवतीति वैजयन्ती ॥

(4) 'काम्यानाह' इति मुद्रितविष्णुस्मृतौ

छन्दोगपरिशिष्टे कात्यायनः । [२,८१-९२]

पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते ।[1]
वासरस्य तृतीयांशे नातिसन्ध्यासमीपतः ॥
यदा चतुर्दशीयामं तुरीयमनुपूरयेत् ।
अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते ॥
यदुक्तं यदहस्त्वेव दर्शनं नैति चन्द्रमाः ।
तत्क्षयापेक्षया ज्ञेयं क्षीणे राजनि चेत्यपि ॥
यच्चोक्तं दृश्यमानेऽपि तच्चतुर्दश्यपेक्षया ।
अमावास्यां प्रतीक्षेत तदन्ते वापि निर्वपेत् ॥
अष्टमेंऽशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः ।
अमावास्याष्टमांशे च पुनः किल भवेदणुः ॥
आग्रहायण्यमावास्या तथा ज्येष्ठस्य या भवेत् ।
विशेषमाभ्यां ब्रुवते चन्द्रचारविदो जनाः ॥

अत्रेन्दुराद्यप्रहरेऽवतिष्ठते चतुर्थभागोनकलावशिष्टः ।
तदन्त एव क्षयमेति कृत्स्नमेवं ज्योतिश्चक्रविदो वदन्ति ॥

यस्मिन्नब्दे द्वादशैकश्च यव्य-
स्तस्मिंस्तृतीया परिदृश्या न जायते ॥
एवं चारं चन्द्रमसो विदित्वा
क्षीणे तस्मिन्नपराह्णे च दद्यात् ॥
संमिश्रा या चतुर्दश्या अमावास्या भवेत् क्वचित् ।
खर्विता तां विदुः केचिद्गुपेध्वमिति चापरे ॥
वर्धमानाममावास्यां लक्षयेदपरेऽहनि ।
यामांस्त्रीनधिकान् वापि पितृयज्ञस्ततो भवेत् ॥
पक्षादावेव कुर्वीत सदा पक्षादिकं चरुम् ।
पूर्वाह्ण एव कुर्वन्ति विद्धेऽप्यन्ये मनीषिणः ॥

(1) पिण्डपितृयज्ञाङ्गभूतानां पिण्डानामनु पश्चादाह्रियते क्रियते इति 'पिण्डान्वाहार्यकं श्राद्धं क्षीणे' 'राजनि' इन्दौ कर्तव्यम् ॥ (स्मृतिचन्द्रिका, p. 307,)

'क्षीणे राजनि' क्षीणे सोमे । 'तृतीयांशे' त्रिधा विभक्तदिवसतृतीयभागे, अपराह्ण इति यावत्। 'चतुर्दशीयामं' चतुर्दश्या यामम् । 'तुरीयं' चतुर्थम् । 'पूरयेत्' अमावास्या क्षीयमाणेति सम्बन्धः । 'यदुक्तं [1]'यदहस्त्वेव' इत्यादिना चन्द्रदर्शनश्रुतिविरोधमाशङ्क्य परीहारः कृतः, अदर्शनस्य क्षयोपलक्षणत्वात् । 'दृश्यमानेऽप्येकदा' इति यद्गोभिलवचनम् [१,७,९], तदपीत्थंभूतचतुर्दशीविषयम् । 'तदन्ते' चतुर्दशीशेषे। यदामावास्या श्राद्धयोग्यकालव्यापिनी न भवति तदायं पक्षो बोद्धव्यः । इतरथा तु प्रथम एव पक्षः । 'अमावास्याऽष्टमांश' इति, यदाऽमावास्याद्यष्टमोंऽशोऽपराह्णव्यापनयोग्यो भवत्यपरदिने तदाप्यणुरूपस्य चन्द्रमसो विद्यमानत्वात् क्षयाभावान्न तत्र श्राद्धं कर्तव्यम्। अत एव हेतोर्यत्रामावास्याया न वृद्धिक्षयौ, किं तु विष्टम्भेनोभयदिनयोरपराह्णसंबन्धामावास्यासंभवस्तदा पूर्वदिन एव श्राद्धं कर्तव्यम् । 'क्षीणे राजनि शस्यत' इति मनुवचनात् । आग्रहायणज्येष्ठामावास्ययोः तज्ज्योतिःशास्त्रानुसारेण चन्द्रगतिवैलक्षण्यात्, 'अष्टमेंऽशे चतुर्दश्याः क्षीणो भवति' इत्यादिप्रकारस्यासंभवादुत्तरदिन एवास्याष्टमांशेऽपि श्राद्धं कर्तव्यमित्यर्थः । 'तदन्त

(1) चतर्दश्याः प्रहरचतुर्थं यदमावास्या व्याप्नोति, अपरादिने च क्षीयमाणा तृतीयांशव्यापिनी, तदा चतुर्दशीदिन एव श्राद्धमिष्यते । एवं तद्दिनाविहित-तृतीयांशेऽमावास्याऽप्राप्तावपि तद्दिन एव श्राद्धम् । अपरादिने तृतीयांशाप्राप्तेः । ननु चैवं "यदहस्त्वेव चन्द्रमा न दृश्यतेताममावास्यां कुर्वीत" इति श्रुतिविरोधः स्यात् । तदहोरात्रशेषे सिनीवालीये चन्द्रदर्शनात् । न च "दृश्यमानेप्येऽकदा" इति गोभिलसूत्रात् [१,७,९] सोऽपि वैकल्पः काल इति वाच्यम् । अतुल्यबलत्वेन श्रुतिस्मृत्योर्विकल्पाभावात् । अत एव 'यदहस्त्वे वेति' न सूत्राविरोध आशङ्कितः । तद्विरोधस्य 'दृश्यमानेऽप्येकदा' इति विकल्पराहितत्वादित्यतस्त विरोधं परिहरति ॥' नारायणोपाध्यायकृतपारिशिष्टप्रकाशः pt. 2, p. 64-65.]

एव' इति अमावास्यान्त एवेत्यर्थः। 'खर्विता' इति निन्दयानुष्ठानाङ्गत्वमुक्तम्। अपरे तु तामेव 'उपेध्वं' इति, अर्थानुष्ठानार्थमुपगच्छतेति मन्यन्ते। एवं हि विकल्पे व्यवस्थामाह 'वर्धमानां' इत्यादि। एतेनामावास्यावृद्धिपक्षे चतुर्दशीसंमिश्रा हेयैव। इतरथा तु क्षीयमाणत्वे स्तम्भे चतुर्दशीमिश्रैव ग्राह्याऽनुष्ठनार्थमित्युक्तम्॥ नन्वेवं वर्धमानामावास्यापक्षे तस्यामेवामायामनुष्ठेयानुष्ठाने प्रतिपदनुष्ठेयं पक्षादिचरुप्रभृति द्वितीयाविद्धेऽपि प्रसज्येत। तच्चात्यन्तनिषिद्धम्।

पर्वणो यश्चतुर्थोंऽश आद्याः प्रतिपदस्त्रयः।
यागकालः स विज्ञेयः प्रातर्युक्तो मनीषिभिः॥

इति बोधायनेनैतावत एव कालस्य यज्ञाङ्गत्वेनोक्तत्वात्। द्वितीयाविद्धे 'एष वै सुमना नामेष्टिः' इत्यादितैत्तिरीयश्रुतौ निन्दावचनाच्च। तत्राह

'पूर्वाह्ण एव कुर्वन्ति विद्धेऽप्यन्ये मनीषिणः' इति।

अनेनेदमुक्तं भवति—द्वितीयारहितस्येष्टिकालस्य प्रातर्युक्तस्य प्राप्तौ सत्यां द्वितीयासहितो निन्दितः। अप्राप्तौ स एव यागाङ्गमिति॥ अमावास्याप्रसङ्गादिदमुक्तम्॥

[1]ब्राह्मपुराणे

अमावास्यायां श्रवणं रक्षोघ्नं वैष्णवं यदा।
तदा पितृभ्यः श्राद्धं तु दत्तमक्षय्यमुच्यते॥

विष्णुपुराणे [३, १४, ७-९; १५-१६]

अमावास्या यदा मैत्रविशाखास्वातियोगिनी।
श्राद्धे पितृगणस्तृप्तिं प्राप्नुयादष्टवार्षिकीम्॥
अमावास्या यदा पुष्ये रौद्रे चर्क्षे पुनर्वसौ।
द्वादशाब्दं तदा तृप्तिं प्रयान्ति पितरोऽर्चिताः॥

(1) हेमाद्रिः, १७४

वासवाजैकपादृक्षे पितॄणां तृप्तिमिच्छताम् ।
वारुणेन त्वमावास्या देवानामपि दुर्लभा ॥
माघासिते पञ्चदशी कदाचिदुपैति योगं यदि वारुणेन ।
ऋक्षेण कालः स परः पितॄणां न ह्यल्पपुण्यैर्नृप लभ्यतेऽसौ ॥
[1]काले धनिष्ठा यदि नाम तस्मिन् भवेत्तु भूपाल तदा पितृभ्यः।
दत्तं जलान्नं प्रददाति तृप्तिं वर्षायुतं तत्कुलजैर्मनुष्यैः ॥
[2]तत्रैव चेद्भाद्रपदास्तु पूर्वाः काले यदा तत् क्रियते पितृभ्यः ।
श्राद्धं परां तृप्तिमुपेत्य तेन युगं सहस्रं पितरः स्वपन्ति ॥

'मैत्रं' अनूराधा। 'रौद्रं' आर्द्रा। 'वासवं' धनिष्ठा। 'अजैकपात्' पूर्वभाद्रपदा। 'वारुणं' शतभिषक्।

कात्यायनः[3]

श्रद्धायुतं श्राद्धं कुर्वीत शाकेनापि। नापरपक्षमतिक्रमेत्। मासि मासि चोशनमिति श्रुतिः ॥

बैजवापः

कृष्णपक्षे श्राद्धं कुर्वीतान्नं संस्कृत्य ।

'संस्कृत्य' पक्त्वा ।

[4]मनुः [३, २७६, २७८]

कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् ।
श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः ॥
यथा चैवापरः पक्षः पूर्वपक्षाद्विशिष्यते ।
तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते[5] ॥

(1) तस्मिन् काले माघे मासि असितपञ्चदश्यामित्यर्थः। (हेमाद्रिः, १७५)
(2) तत्रैव तस्यां माघपञ्चदश्यामित्यर्थः । (हेमाद्रिः, १७६)
(3) अपरार्कः, ४२२
(4) 'शस्त्रहतानां श्राद्धकर्माणि चतुर्दशी शस्ता' इति विष्णुस्मृतिः (७८,५०) 'चतुर्दश आयुध राद्धिः' इत्यापस्तम्बः (२,१६,२०,)
(5) विशिष्यते प्रतिवचनात् पूर्वाह्णेऽपि श्राद्धकर्तव्यतां बोधयति' इति कुल्लूकभट्टः ।

ब्रह्मपुराणे

पयोमूलफलैः शाकैः कृष्णपक्षे च सर्वदा ।
पराधीनः प्रवासी वा निर्धनो वापि मानवः ॥
मनसा भावशुद्धेन श्राद्धे दद्यात्तिलोदकम् ।
नाश्नन्ति पितरश्चेति कृत्वा हव्यमले तु यः ॥
न तर्पयति तान् भक्त्या देहात्तद्रुधिरं बत ।
पिबन्ति सर्वनाशं च कुर्वन्त्यनु पदे पदे ॥
तस्माद्भयेन च पितॄंस्तर्पयेत् सततं बुधः ॥

यमः

पक्षान्ते निर्वपेत्तेभ्यो अपराह्णे च वेदवित् ।
अपां समीपे दूर्वासु दर्भेषु सिकतासु च ॥

'तेभ्यः' पितृभ्यः, 'पितरोऽस्य न गृह्णन्ति' इत्यत्रैव प्रकरणे यमेनोक्तत्वात् । 'दर्भेषु' दर्भमयदेशेषु । एवं दूर्वादिष्वपि ।

तथा

आषाढ्यामथ कार्तिक्यां माघ्यां त्रीन् पञ्च वा द्विजान् ।
तर्पयेत् पितृपूर्वं तु तदस्याक्षय्यमुच्यते ॥

अस्यार्थः—श्राद्धं कृत्वा पुनस्त्रीन् पञ्च वा विप्रान् पृथगेव भोजयेत्, तदक्षय्यफलं भवति ॥

गौतमः [१८,१-४]

अथ श्राद्धममावास्यायां पितृभ्यो[1] दद्यात् । पञ्चमी-प्रभृति वापरपक्षस्य यथा श्राद्धम् । सर्वस्मिन् वा द्रव्यदेश-ब्राह्मणसन्निधौ[2] । कालनियमः शक्तितः ॥

(1) 'पितृभ्यः' पितॄनुद्दिश्य । बहुवचनात् पितामहप्रपितामहयोरपि देयम् । (मस्करिः)

(2) 'संनिधाने' इति मस्करिपाठः । 'उपपत्तौ' इति च व्याचष्टे ।

योऽयममावास्यादिकालनियम उक्तः शक्तस्य द्रव्यादियोगिनो अरोगिणो बोद्धव्यम्। असामर्थ्ये तु तदकरणेऽपि न प्रत्यवैति ॥

वसिष्ठः [११, ४३]

श्रावण्याग्रहायिण्योश्चान्वष्टक्यां च पितृभ्यो दद्यात्।

निगमः

आहिताग्नेः पित्रर्चनं पिण्डैरेव ब्राह्मणानपि वा भोजयेत् पूर्वश्रुतेः। अपरपक्षे यदहः संपद्येत। अमावास्यायां तु विशेषेणाष्टकातीर्थतिथिद्रव्यब्राह्मणसंपत्सु चिकिर्षेत ॥

[1]ब्रह्माण्डपुराणे

कन्यां गते सवितरि यान्यहानि तु षोडश।
क्रतुभिस्तानि तुल्यानि तेषु दत्तमथाक्षयम् ॥

तथा

अश्वयुक्कृष्णपक्षे तु श्राद्धं कार्यं दिने दिने।
त्रिभागहीनं पक्षं वा त्रिभागं त्वर्धमेव वा[2] ॥
श्यामाकैस्तु विशेषेण प्रसिद्धैस्तत्पितृप्रियैः।

'दिने दिने' प्रतिदिनम्, सकल एव पक्ष इत्यर्थः। 'त्रिभागहीनं' पञ्चमीमारभ्येत्यर्थः॥'त्रिभागं' दशमीमारभ्य। 'अर्धं' पक्षस्याष्टमीमारभ्येत्यर्थः।

तथा[2]

यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः।
तावच्छ्राद्धस्य कालः स्याच्छून्यं प्रेतपुरं तदा ॥

(1) 'पुराणे' इति स्मृतिचन्द्रिका, ८८; 'ब्रह्माण्डपुराण' इत्यपरार्कः, (४२४)

(2) अपरार्कः, ४२३—'अत्र पौर्णमास्यन्तमासाभिप्रायेण प्रोष्ठपद्या अपरपक्षोऽश्वयुक्कृणपक्ष उक्तः। त्रिभागहीनपक्षेऽपि प्रत्यहं श्राद्धं कार्यम्। पक्षमिति द्वितीयावशादत्यन्तसंयोगावगमात्।

(3) 'ब्रह्मपुराणम्' इत्यपरार्कः (४२४)

'तावच्छ्राद्धस्य काल' इति, यस्य कुतश्चिन्निमित्तात् कन्यागतापरपक्षे श्राद्धं न निष्पन्नम्, तं प्रति यावत्तुलास्थः सविता तावान् श्राद्धकालो विहित इत्यर्थः।

भविष्यपुराणे

येयं दीपान्विता राजन् ख्याता पञ्चदशी भुवि।
तस्यां दद्यान्न चेद्दत्तं पितॄणां तु महालये॥

'महालये' कन्यागतापरपक्षे।

ब्रह्मपुराणे

श्राद्धं विषुवतोः कुर्यात् तथा चायनयोर्द्वयोः।
दिनलोपे व्यतीपाते ग्रस्तयोश्चन्द्रसूर्ययोः॥
'दिनलोपः' यस्मिन्नहोरात्रे दिनत्रयस्पर्शः।

तथा

युगाद्येषु युगान्तेषु श्राद्धमक्षयमुच्यते॥

वायुपुराणे

पित्र्यदानाय मूले स्युरष्टकास्तिस्र एव च।
कृष्णपक्षे वरिष्ठा हि पूर्वा चैन्द्रीति भाष्यते॥
प्राजापत्या द्वितीया स्यात् तृतीया वैश्वदेविकी।
आद्या यूपैः सदा कार्या मांसैरन्या भवेत्तथा॥
शाकैः कार्या तृतीया स्यादेष द्रव्यगतो विधिः।
अन्वष्टका पितॄणां वै नित्यमेव विधीयते॥
या चाप्यन्या चतुर्थी स्यात्तां च कुर्याद्विशेषतः।
आसु श्राद्धं च यः कुर्यात् सर्वस्वेनापि नित्यशः॥
क्षिप्रं प्राप्नोति श्रेयांसि परत्रेह च मोदते।
पितरः पर्वकालेषु तिथिकालेषु देवताः॥
सर्वे गृहस्थमायान्ति निपानमिव धेनवः।
यस्य ते प्रतिगच्छेयुरष्टकासु ह्यपूजिताः॥
मोघास्तस्य भवन्त्याशाः परत्रेह च नित्यशः॥

'मूले' आदौ, प्रधानस्थान इति यावत्। अष्टकायास्तिथिपर्वोभयरूपत्वात् देवपितृपूजाऽवश्यं कर्तव्या।

ब्रह्मपुराणे

ऐन्द्र्यां तु प्रथमायां तु शाकैः संतर्पयेत् पितॄन्।
प्राजापत्यां द्वितीयायां मांसैः शुद्धैश्च तर्पयेत्॥
वैश्वदेव्यां तृतीयायामपूपैश्च यथाक्रमम्।
वर्षासु मेध्यशाकैस्तु चतुर्थ्यामेव सर्वदा॥

'शुद्धैः' प्रशस्तैः। अत्र च शाकादिविकल्पः शाखाभेदव्यवस्थितः॥

देवलः

अयुग्मास्तिथयः सर्वा युग्माभ्यः प्रतिपूजिताः।
कालतः पूजितौ मासौ माघप्रोष्ठपदावुभौ॥
पक्षयोः शुक्लपक्षाद्धि बहुलः श्राद्धपूजितः।
उक्ता तिथिपरीक्षेयं नक्षत्रेषु प्रचक्षते॥
उत्तराः श्रवणस्तिष्यो मृगशीर्षं प्रजापतिः।
हस्तः शतभिषक् स्वातिश्चित्रा पित्र्यमथाश्विनम्॥
नक्षत्राणि प्रशस्तानि सदैतानि तु पैतृके।
अपराणि च नक्षत्राण्युच्यन्ते कारणैः क्वचित्॥
यस्मिन् गुणोदितं विप्रं पात्रभूतमवाप्नुयात्।
श्राद्धस्य पूजितः कालः भवेत्स एव वा पुनः॥

'उत्तराः' तिस्रः। 'प्रजापतिः' प्रजापतिदैवत्या रोहिणी। 'पित्र्यं' मघा। 'आश्विनं' अश्विनी। 'अपराणि' धनिष्ठादीनि। 'कारणैः' माघपञ्चदशीयोगादिभिः॥

हारीतः

तीर्थे द्रव्योपपत्तौ तु न कालमवधारयेत्[1]।
पितॄणामतिरेकोऽयं मासि कार्यो ध्रुवः स्मृतः॥

(1) 'तीर्थे' वेण्यादौ, 'द्रव्योपपत्तौ' अलभ्यश्राद्धीयद्रव्यप्राप्तौ च अमावास्यापराह्णादिरूपः कालो न प्रतीक्षितव्यः (श्राद्धचन्द्रिका, पृ. १०)

पात्रं वा ब्राह्मणं प्राप्य सद्यः श्राद्धं विधीयते ।
अष्टका ये चाभ्युदयास्तीर्थयात्रोपपत्तयः ॥

'न कालमवधारयेत्' अमावास्याऽपराह्णादिकं न प्रतीक्षेतेत्यर्थः । 'अतिरेकः' अधिकः अष्टकादिरपि, 'ध्रुवः' आवश्यक इत्यर्थः ॥ 'अष्टका' इत्यादि, मासि कार्या अमावास्याश्राद्धादयः ।

पैठीनसिः

कः श्राद्धकालो देशो द्रव्यं द्विजातय इति ॥

'देशो' वाराणसी । 'द्रव्यं' खड्गमांसादि । 'द्विजातिः' पङ्क्तिपावनादिः ।

शातातपः

नवोदके नवान्ने च गृहप्रच्छादने तथा ।
पितरस्त्वीहयन्त्यन्नमष्टकासु मघासु च ।
तस्माद्दद्यात्सदा युक्तो विद्वत्सु ब्राह्मणेषु च ॥

'नवोदके' वर्षादौ । 'ब्राह्मणेषु' प्राप्तेष्विति शेषः ।

मनुः । [३, २७३ - २७४]

यत्किंचिन्मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम् ।
तदप्यक्षयमेव स्याद्वर्षासु च मघासु च ॥
अपि नः स कुले भूयाद्यो नो दद्यात् त्रयोदशीम् ।
पायसं मधुसर्पिर्भ्यां प्राक्छाये कुञ्जरस्य तु[1] ॥

'प्राक्छाये कुञ्जरस्य' प्राच्यां दिशि गतायां हस्तिच्छायायाम् ॥

वसिष्ठः [११,३९ - ४०]

पिता पितामहश्चैव तथैव प्रपितामहः ।
उपासते सुतं जातं शकुन्ता इव पिप्पलम् ॥

(1) 'प्राक्छाये प्राच्यां दिशि गतायां छायायामपराह्णेतरे काल-इत्यर्थः—मेधातिथिः

मधुमांसैश्च शालैश्च पयसा पायसेन च ।
एष नो दास्यति श्राद्धं वर्षासु च मघासु च ॥

शङ्खलिखितयमाः

पिता पितामहश्चैव तथैव प्रपितामहः ।
जातं पुत्रं प्रशंसन्ति पिप्पलं शकुना इव ॥
मधुमांसेन खड्गेन पयसा पायसेन वा ।
एष दास्यति नस्तृप्तिं वर्षासु च मघासु च ॥

विष्णुः [७८, ५२ - ७३]

[अपि] पितृगीते गाथे भवतः ।
अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः ।
प्रावृट्कालेऽसिते पक्षे त्रयोदश्यां समाहितः ॥
मधूत्कटेन यः श्राद्धं पायसेन समाचरेत् ।
कार्तिकं सकलं[1] वापि प्राक्छाये कुञ्जरस्य वा ॥

पैठीनसिः

छागेन सर्वलोहेन वर्षासु च मघासु च ।
पुत्रो वा यदि वा पौत्रो यो नो दद्यात् त्रयोदशीम् ॥

इति पितरः समुदीक्षन्ते ॥

'सर्वलोहेन' सर्वतो लोहितवर्णेन छागेनेत्यर्थः ॥

तथा हविष्यप्रस्तावे देवलः

'छागो वा सर्वलोहितः' इति ॥

याज्ञवल्क्यः [१, २६१]

यद्ददाति गयास्थश्च सर्वमानन्त्यमुच्यते ।
तथा वर्षात्रयोदश्यां मघासु च विशेषतः ॥

शङ्खः

प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम् ।
प्राप्य श्राद्धं हि कर्तव्यं मधुना पायसेन च ॥

(1) 'सकलं मास'मिति केशववैजयन्ती पठति ।

ब्रह्मपुराणे

आश्वयुज्यां च कृष्णायां त्रयोदश्यां मघासु च ।
प्रावृडृतौ यमः प्रेतान् पितॄंश्चाथ यमालयात् ॥
विसर्जयति मानुष्ये कृत्वा शून्यं स्वकं पुरम् ।
क्षुधार्ताः कीर्तयन्तश्च दुष्कृतं च स्वयं कृतम् ॥
काङ्क्षन्तः पुत्रपौत्रेभ्यः पायसं मधुसंयुतम् ।
तस्मात्तां तत्र विधिना तर्पयेत् पायसेन तु ॥
मध्वाज्यतिलमिश्रेण तथा शीतेन चाम्भसा ।
ग्रासमात्रं परगृहाद्भ्यक्तं यः प्राप्नुयान्नरः ॥
भिक्षामात्रेण यः प्राणान्संधारयति वा स्वयम् ।
यो वा संवर्धयेद्देहं प्रत्यहं स्वात्मविक्रयात् ॥
श्राद्धं तेनापि कर्तव्यं तैस्तैर्द्रव्यैः सुसंचितैः ।
त्रयोदश्यां प्रयत्नेन वर्षासु च मघासु च ॥
नास्मात् परतरः कालः श्राद्धेष्वन्यत्र विद्यते ।
यत्र साक्षात्तु पितरो गृह्णन्त्यमृतमक्षयम् ॥

अत्र च त्रयोदशीविषयानेकवाक्यपर्यालोचनया प्रौष्ठपद्यूर्ध्वं कृष्णत्रयोदश्यां पुत्रिणाऽपुत्रिणा वा पिण्डसहितश्राद्धमेवावश्यं कर्तव्यमिति गम्यते । मघायुक्तायां तु तस्यामेव ज्येष्ठपुत्रवता पिण्डरहितं श्राद्धं कर्तव्यम् । कन्यागतापरपक्षाधिकारे—

तत्रापि महती पूजा कर्तव्या पितृदैवते ।
ऋक्षे पिण्डप्रदानं तु ज्येष्ठपुत्रो विवर्जयेत् ॥

इति देवीपुराणवचनात् । यत्तु 'युवमारिणश्च भवन्ति' इत्यादिनिन्दाश्रवणं तद्वक्ष्यमाणत्रयोदश्युपविद्धकाम्यश्राद्धप्रयोगविषयम् ॥

पार्वणश्राद्धविध्यनन्तरं मनुः [३, २८१-२८२]

अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत्।
हेमन्तग्रीष्मवर्षासु पाञ्चयज्ञिकमन्वहम् ॥
न पैतृकयज्ञिको होमो लौकिकेऽग्नौ विधीयते।
न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः ॥

'त्रिरब्दस्य' संवत्सरे वारत्रयम्। अयं च साग्निनिरग्निसाधारणः। संवत्सरमध्ये यदवश्यकर्तव्यत्वेनोक्तं पार्वणश्राद्धं कुतश्चिद्द्रव्याद्यसंभवादेर्निमित्तादसंपत्तावनुकल्पः॥ पाञ्चयज्ञिकं तु पञ्चयज्ञान्तर्गतश्राद्धं यत्तत्प्रतिदिनमुदकादिनापि कर्तव्यम्। अत एव पार्वणश्राद्धमभिधाय देवलेनापि—

एतेन विधिना श्राद्धं कुर्यात् संवत्सरं क्वचित्।
द्विश्चतुर्वा यथा श्राद्धं मासे मासे दिने दिने॥

इति शक्तिसंभवासंभवतारतम्येन बहवः कल्पाः प्रदर्शिताः। हेमन्तग्रीष्मवर्षासु त्रिरनुष्ठीयमानं श्राद्धं कन्याकुम्भवृषस्थेऽर्के यस्यां कस्यां च तिथौ कर्तव्यम्। आहिताग्निनापि तु तत्रापि दर्श एव। यस्मात् श्राद्धाङ्गपैतृयज्ञिकशब्दोपात्ताग्नौ करणहोमाङ्गभूतो दक्षिणाग्निर्न दर्शव्यतिरेकेणान्यदस्ति। निमित्तान्तरात्तयदष्टकादिश्राद्धं तद्यतः कुतश्चिद्विप्रपाण्यादि निष्पाद्याग्नौ करणाङ्गमेव कार्यम्॥

देवलः

मानवः श्राद्धकल्पोऽयं मनुना समुदाहृतः॥
बहुपिण्डाष्टकासु स्यादेकपिण्डा तु नाष्टका॥
एतेन विधिना श्राद्धं कुर्यात् संवत्सरं सकृत्।
द्विश्चतुर्वा यथाश्राद्धं मासे मासे दिने दिने॥

यमः

राहुदर्शनदत्तं हि श्राद्धमानन्त्यमुच्यते॥

विष्णुः [७७, ८-९]

सन्ध्यारात्र्योर्न कर्तव्यं श्राद्धं खलु विचक्षणैः ।
तयोरपि च कर्तव्यं यदि स्याद्राहुदर्शनम् ॥
राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम् ।
गुणवत्सर्वकामोऽयं पितॄणामुपतिष्ठते ॥

शातातपः

रात्रौ श्राद्धं न कुर्वीत राहोरन्यत्र दर्शनात् ॥
सन्ध्ययोरुभयोश्चैव न कुर्वीत कदाचन ॥

आपस्तम्बः [१,१६,२३–२४]

न च नक्तं श्राद्धं कुर्वीतान्यत्र राहुदर्शनात् ॥

मनुः [३,२८०]

रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्तिता हि सा ।
सन्ध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते[1] ॥

(1) 'रात्रौ श्राद्धं न कुर्वीत' इति श्राद्धस्य ध्वंसनसामान्यात् राक्षसी चासौ मन्वादिभिः कथिता । तथा संध्ययोरादित्येऽचिरोदित इति रात्र्यादौ निषेध कुर्वन्नप-राह्णादन्यत्रापि तिथिच्छेदग्रहणादपेक्षया श्राद्धमस्तीति ज्ञापयति मासानुमासिकश्राद्धाद्य-संभवेन (गोविन्दराजः)

## ॥ ४ ॥

## ॥ अथ काम्यश्राद्धकालाः ॥

तत्र कात्यायनः

अथ काम्यानि भवन्ति। स्त्रियः प्रतिपदि। द्वितीयायां स्त्रीजन्म। अश्वास्तृतीयायाम्। चतुर्थ्यां क्षुद्रपशवः। पुत्राः पञ्चम्याम्। षष्ठयां द्यूतऋद्धिः। कृषिः सप्तम्याम्। अष्टम्यां वाणिज्यम्। एकशफं नवम्याम्। परिचारिका एकादश्याम्। द्वादश्यां धनधान्यम्। कुप्यं ज्ञातिश्रैष्ठ्यं त्रयोदश्याम्। युवानस्तस्मिन् म्रियन्ते शस्त्रहतस्य चतुर्दश्याम्। अमावास्यायां सर्वम्॥

मनुः[1]

कुर्वन् प्रतिपदि श्राद्धं सुरूपांल्लभते सुतान्।<br>
कन्यकास्तु द्वितीयायां तृतीयायां तु वन्दिनः॥<br>
पशून् क्षुद्रांश्चतुर्थ्यां तु पञ्चम्यां शोभनान् सुतान्।<br>
षष्ठ्यां द्यूतं कृषिं चापि सप्तम्यां लभते नरः॥<br>
अष्टम्यामपि वाणिज्यं लभते श्राद्धदः सदा।<br>
स्यान्नवम्यामेकखुरं दशम्यां द्विखुरं बहु[2]॥<br>
एकादश्यां तथा ऋद्धिं[3] ब्रह्मवर्चस्विनः सुतान्।<br>
द्वादश्यां जातरूपं च रजतं कुप्यमेव[4] च॥

(1) इमे श्लोकाः मनुस्मृतिव्याख्यातृभिः मेधातिथिगोविन्दराजकुल्लूकादिभिर्न धृता व्याख्याताश्च। दाक्षिणात्यकोशेषु परं वर्तन्ते, व्याख्याताश्च नन्दिन्याख्यायां व्याख्यायाम्॥

See J. Jolly's Notes to his edition of *Mānava Dharma Śāstra* (p. 298)

(2) 'चाखुरं तथा' इति नन्दिनीपाठः।

(3) 'तथा रूप्यं' इति नन्दिनीपाठः

(4) रूप्यमेव-इति नन्दिनीपाठः

ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्दश्यां तु सुप्रजाः[1]।
प्रीयन्ते पितरश्चास्य ये शस्त्रेण हता रणे ॥
पक्षत्यादिषु निर्दिष्टान् विपुलान् मनसः प्रियान्[2]।
श्राद्धदः पञ्चदश्यां तु सर्वान् कामान् समश्नुते ॥

'वन्दिनः' स्तावकान्। सद्यो भवतीति यावत्। 'द्यूतं' द्यूतजयम्। 'कुप्यं' सुवर्णरजतातिरिक्तं ताम्रादिधनम्। 'पक्षत्यादि' इति, पक्षतिः प्रतिपत्, प्रतिपदादितिथिफलं शोभनममावास्यायामित्यर्थः।

आपस्तम्बः [२,१६,६-२१]

सर्वेष्वेवापरपक्षस्याहस्सु क्रियमाणे पितॄन् प्रीणाति। कर्तुस्तु कालाभिनियमात् फलविशेषः। प्रथमेऽहनि क्रियमाणे स्त्रीप्रायमपत्यं जायते। द्वितीये स्तेनाः। तृतीये ब्रह्मवर्चस्विनः। चतुर्थे क्षुद्रपशुमान्। पञ्चमे पुमांसो बह्वपत्यो न चानपत्यः प्रमीयते। षष्ठेऽध्वशीलोऽक्षशीलः। सप्तमे कर्षे राद्धिः। अष्टमे पुष्टिः। नवम एकखुराः। दशमे व्यवहारे राद्धिः। एकादशे कृष्णायसत्रपुसीसम्। द्वादशे पशुमान्। त्रयोदशे बहुपुत्रो बहुमित्रो दर्शनीयापत्यो युवमारिणः [भवन्ति]। चतुर्दश आयुधे राद्धिः। पञ्चदशे पुष्टिः ॥[3]

'सततं श्राद्धं कुर्वन्नाप्नोति' इत्यधिकारे—

(1) 'पुत्रप्रजाः' इति नन्दिनी.

(2) Omitted in Jolly's Notes. See Chowkhamba edn. of मनुस्मृति, p. १११.

(3) 'अध्वशीलः' पान्थः। 'अक्षशीलः' कितवः। 'राद्धिः' सिद्धिः। 'एकखुराः' अश्वादयः। 'व्यवहारो' वाणिज्यं शास्त्रपरिज्ञानं वा। 'आयुधे राद्धिः' सङ्ग्रामे जयः ॥ (उज्ज्वला).

विष्णुः [७८, ३६ - ५०]

गृहेष्वभिरूपाः स्त्रियः प्रतिपदि[1]। कन्यां वरदां[2] द्वितीयायाम्। सर्वान्कामांस्तृतीयायाम्। यशश्चतुर्थ्याम्। [सुरूपान् सुतान्] पञ्चम्याम्। द्यूतविजयं षष्ठ्याम्। [3]कृषिं सप्तम्याम्। [4]वाणिज्यमष्टम्याम्। पशून्नवम्याम्। वाजिनो दशम्याम्। पुत्रान् ब्रह्मवर्चस्विन एकादश्याम्। कनकरजते द्वादश्याम्। सौभाग्यं त्रयोदश्याम्। सर्वान् कामान् पञ्चदश्याम्। शस्त्रहतानां श्राद्धकर्मणि चतुर्दशी शस्ता॥

[5]'श्राद्धं कुर्याद्' इत्यधिकारे—

हारीतः

पञ्चमीं पुत्रकामः। षष्ठीं धनकामः। सप्तमीं पशुकामः। अष्टमीं शस्त्रहतानामारोग्यकामः। नवमीं सेनामभिजेतुकामः। दशमीमन्नकामः। एकादशीं वृद्धिकामः। द्वादशीं श्रीकामः। त्रयोदशीं यशस्कामः। चतुर्दशीं भूतिकामः स्वस्तिकामो वा। अमावास्यां सर्वकामः॥

[5]पैठीनसिः

पञ्चम्यां पुत्रकामो यजेत। षष्ठ्यां पशुकामः। सप्तम्यां वृद्धिकामः। अष्टम्यामन्नाद्यकामः। नवम्यां ब्रह्मवर्चसकामः। दशम्यां सर्वकामः। एकादश्यां धनकामः। द्वादश्यां क्षेत्रकामः। त्रयोदश्यां स्त्रीवशित्वम्। चतुर्दश्यां शस्त्रेण हतानाम्। सर्वकामोऽमावास्यायाम्॥

(1) 'गृहमभिरूपाः स्त्रियः' इति मु. वि.
(2) 'वरदां' अभीष्टप्रदाम्। 'कन्यां' जामातृंश्च। (वैजयन्ती)
(3) 'कृषिं' कृषिफलम्।
(4) 'वाणिज्यं' क्रयविक्रयफलम्।
(5) हेमाद्रिः, २६३.

ब्रह्मपुराणे

श्राद्धं तु पौर्णमास्यां च कृत्वा पूर्णफलं लभेत् ।
प्रतिपद्यर्थलाभाय द्वितीयार्थाय चापरा ॥
तृतीयायां वरार्थाय शत्रुनाशय चापरे ।
पञ्चम्यां-धनलाभाय श्राद्धं कुर्यात् प्रयत्नतः ॥
षष्ठ्यां तु बालरक्षार्थं सप्तम्यां बन्धुवृद्धयोः ।
वृद्धिकामस्तथाष्टम्यां स्त्रीकामो नवमेऽहनि ॥
दशम्यां ब्रह्मतेजोऽर्थी संतत्यर्थी तथापरे ।
द्वादश्यां जयलाभाय त्रयोदश्यां विभूतये ॥
प्रायानशनशस्त्राग्निविषोद्बन्धकिनां तथा ।
चतुर्दश्यां तु कर्तव्यं तृप्त्यर्थमिति निश्चयः ॥
अमावास्यां तु स्वर्गाय भक्त्या संतर्पयेत् पितॄन् ॥

अत्र च यत्तिथिफलनानात्वं तदधिकारिभेदेन बोद्धव्यम् । यत्र च स्तैन्ययुवमारित्वादिरपत्यदोषः श्रूयते, तत्राप्यनपत्यतया तद्द्वेषसहितापत्यमात्रार्थिनोऽधिकारः ॥

मनुः [३, २७७]

युक्षु कुर्वन् दिनर्क्षेषु सर्वान्कामान्समश्नुते ।
अयुक्षु तु पितॄनर्चन्[1] प्रजां प्राप्नोति पुष्कलाम्[2] ॥

यमः

युक्षु कुर्वन् दिनर्क्षेषु सर्वान्कामानवाप्नुयात् ।
गजच्छायां पितॄनर्चन् प्रजां प्राप्नोति पुष्कलाम् ॥

(1) 'कुर्वन्' इति मूलमातृकायाम् । 'अर्चन्नि'ति मेधातिथिप्रभृतयः ।

(2) युग्मासु तिथिषु (द्वितीयाचतुर्थ्यादिषु) श्राद्धं कुर्वन्, सर्वानभिलषितान् कामानवाप्नोति । अयुग्मादिषु तिथिषु (प्रतिपत्तृतीयाद्यासु) अयुग्मेषु नक्षत्रेषु (अश्विनीकृत्तिकादिषु)श्राद्धेषु पितॄन् पूजयन्, सुतधनादिपरिपुष्टां संततिं प्राप्नोति ॥ (गोविन्दराजः)

याज्ञवल्क्यः [१, २६५–२६८]

स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा।
पुत्रं श्रैष्ठ्यं ससौभाग्यं समृद्धिं मुख्यतां शुभान्।
प्रवृत्तचक्रतां चैव वाणिज्यप्रभृतींस्तथा।
अरोगित्वं यशो वीतशोकतां परमां गतिम्॥
धनं विद्यां[1] भिषक्सिद्धिं कुप्यं गा अप्यजाविकम्।
अश्वानायुश्च विधिवद्यः श्राद्धं संप्रदास्यति[2]॥
कृत्तिकादिभरण्यन्तं स कामानाप्नुयादिमान्।
आस्तिकः श्रद्दधानश्च व्यपेतमदमत्सरः॥

'प्रवृत्तचक्रता' सर्वदाप्रतिहताज्ञाशालिता[3]।

विष्णुः [७८, १-३७]

सततमादित्यदिने श्राद्धं कुर्वन्नारोग्यमाप्नोति। सौभाग्यं चान्द्रे। समरविजयं कौजे। सर्वान् कामान् बौधे। विद्यामभीष्टां जैवे। धनं शौक्रे। जीवितं शनैश्चरे। स्वर्गं कृत्तिकासु। अपत्यं रोहिणीषु। ब्रह्मवर्चसं सौम्ये।[4] कर्मणां सिद्धिं रौद्रे। भुवं पुनर्वसौ। पुष्टिं पुष्ये। श्रियं सार्पे। सर्वान् कामान् पैत्र्ये। सौभाग्यं भाग्ये। धनमार्यम्णे ज्ञातिश्रैष्ठ्यं हस्ते। सुरूपवतः सुतांस्त्वाष्ट्रे। वाणिज्यसिद्धिं स्वातौ। कनकं विशाखासु। मित्राणि मैत्रे। राज्यं शाक्रे। कृषिं मूले। समुद्रयानसिद्धिमाप्ये। सर्वान् कामान् वैश्वदेवे। श्रैष्ठ्यमभिजिति। सर्वान् श्रवणे। लवणं वासवे। आरोग्यं वारुणे। कुप्यद्रव्यमाजे। गृहमाहिर्बुध्न्ये। गाः पौष्णे। तुरगानाश्विने। जीवितं याम्ये।

(1) 'वेदो' इति मिताक्षरापाठः। 'विद्यां' इति विश्वरूपः।

(2) 'संप्रयच्छति' इति मिता. पाठः। 'परिवेषयेत्' इति विश्वरूपः।

(3) 'स्वर्गं' निरतिशयसुखम्। 'श्रैष्ठ्यं' ज्ञातिषु। 'सौभाग्यं' जनप्रियता। 'समृद्धिः' धनादेः। 'भिषक्सिद्धिः' औषधफलवाप्तिः॥ (मिताक्षरा)

4 'सौम्यं' मृगशिरः। 'रौद्रं' आर्द्रा। 'सार्पं' आश्लेषा।

ब्रह्मपुराणे

अश्विन्यां प्राप्नुयादश्वान् भरण्यामायुरुत्तमम् ।
कृत्तिकायां विज्वरत्वं श्राद्धकृत् समवाप्नुयात् ॥
प्राजापत्ये प्रजां पुष्टिं सौमे चौजः सुशोभनम् ।
आर्द्रायां क्रूरसिद्धिं तु पुत्रान् चेष्टान् पुनर्वसौ ॥
तिष्ये सुतान् वीरधर्मान् सार्पे च लभते धनम् ।
ज्ञातिश्रैष्ठ्यं मघास्वेव भाग्ये सौभाग्यमुत्तमम् ॥
दानशक्तिमथार्यम्णे हस्ते श्रैष्ठ्यं महर्द्धिमत् ।
त्वाष्ट्रे दुहितरं पुण्यं स्वातौ वाणिज्यमुत्तमम् ॥
विशाखायां शुभान् पुत्रान् मैत्रे चात्याहतां गतिम् ।
आधिपत्यं तु ज्येष्ठायां मूले चारोग्यमुत्तमम् ॥
आषाढासु यशोलाभमुत्तरासु विशोकताम् ।
श्रवणेन गतिं पुण्यां धनिष्ठासु धनं बहु ॥
वारुणेन कृषेर्वृद्धिं विशाखे चाविकं बहु ।
बह्वीर्गाश्चोत्तरायां च पौष्णे कुप्यं महानिधिम् ॥
इति संचिन्त्य योगेन विधिना साधयेच्च यत् ।
स तस्मिन् दिवसे श्राद्धे भक्त्या संतर्पयेत् पितॄन् ॥

## ॥ ५ ॥

## ॥ अथ श्राद्धदेशाः ॥

**तत्र विष्णुः** [८५, १-६७]

**अथ पुष्करेष्वक्षयं श्राद्धम् । जपहोमतपांसि च । पुष्करे स्नातमात्रः सर्वपापेभ्यः पूतो भवति । एवमेव गयाशीर्षे । वटे[1] । अमरकण्टके । वराहपर्वते । यत्र क्वचन नर्मदातीरे । यमुनातीरे । गङ्गायां विशेषतः । कुशावर्ते । [बिन्दुके] बिल्वके । नीलपर्वते । कनखले । कुब्जाम्रे । भृगुतुङ्गे । केदारे । महालये । नडन्तिकायाम् । सुगन्धायाम् । शाकंभर्याम् । फल्गुतीर्थे । महागङ्गायाम् । तण्डुलिकाश्रमे [त्रिहलिकाश्रमे] । कुमारधारायाम् । प्रभासे । यत्र क्वचन सरस्वत्यां विशेषतः ।**

1. 'वटे' अक्षयवटे । 'वराहपर्वते' वराहाकारे पर्वतविशेषे । 'कुशावर्तः' त्र्यम्बकगिरिस्थितो गोदावरीप्रभवः । 'बिन्दुके' दक्षिणदेशस्थतीर्थविशेषे । 'बिल्वक' इति पाठस्तत्रैव । 'कुब्जाम्रं' उत्कलदेशस्थं क्षेत्रं, गङ्गाद्वारस्थं वा । 'भृगुतुङ्गो' अमरकण्टकसमीपस्थो विन्ध्यापादः । 'केदारः' उत्तरपर्वतस्थः । 'महालयः' पर्वतविशेषः । 'नडन्तिका' नद्यभियुक्तेभ्यो ज्ञेया । 'सुगन्धा' नदी सौगन्धिकनगसमीपस्था । 'फल्गुतीर्थं' गयास्थम् । 'त्रिहलिकाग्रामः', 'तण्डुलिका' इति पाठः, शालग्रामः । काश्मीरदेशे क्रौञ्चपर्वते कुमारशक्तिप्रहारेण जलधारा निर्गतास्ति सा 'कुमारधारा' । दक्षिणदेशे इषुपातक्षेत्रे वा । 'अगस्त्याश्रमः' पुष्करसमीपे सरस्वतीतीरे । 'कण्वाश्रमो' मालिनीतीरे । 'श्रीपर्वतो' दाक्षिणदेशस्थः श्रीशैलो मल्लिकार्जुनस्थानम् । 'कालोदकं' यामुनस्तीर्थविशेषः । 'उत्तरमानसं' केदारोत्तरपर्वतस्थम् । 'वडवा' तीर्थविशेषो दाक्षिणस्थः । 'मतङ्गवापी' गयादक्षिणभागस्था । 'विष्णुपदं' गयामध्यस्थितम् । 'ओसजं' शूर्पारकं दाक्षिणदेशस्थं तीर्थम् । 'स्वभावा' रघुनाथश्रीकृष्णादीनां जन्मस्थानानि । 'निकुञ्जा' बृन्दावनवर्तीनि भगवत्क्रीडास्थानानि लतागृहाणि । 'मनोज्ञाः' तुलसीचत्वरादयः ॥ (वैजयन्ती)

गङ्गातीरे प्रयागे च सरस्वत्यां विशेषतः ।
सततं नैमिषारण्ये वाराणस्यां विशेषतः ॥

अगस्त्याश्रमे । कण्वाश्रमे । कौशिक्याम् । सरयूतीरे । शोणस्य ज्योतिषायाश्च संगमे । श्रीपर्वते । कालोदके । उत्तरमानसे । [वडवायाम् ।] मतङ्गवाप्याम् । सप्तार्षे । विष्णुपदे । स्वर्गमार्गपदे । गोदावर्याम् । [गोमत्याम् ।] वेत्रवत्याम् । [विपाशायाम् । वितस्तायाम् ।] शतद्रुतीरे । चन्द्रभागायाम् । ईरावत्याम् । सिन्धोस्तीरे । दक्षिणे पञ्चनदे । औसजे । एवमादिष्वन्येषु तीर्थेषु । सरिद्वरासु । सर्वेष्वपि संगमेषु । प्रभवेषु । पुलिनेषु । प्रस्रवणेषु । पर्वतेषु । निकुञ्जेषु । वनेषु । उपवनेषु । गोमयेनोपलिप्तगृहेषु । मनोज्ञेषु । अत्र च पितृगीता गाथा भवन्ति ।

कुलेऽस्माकं स जन्तुः स्याद्यो नो दद्याज्जलाञ्जलीन् ।
नदीषु बहुतोयासु शीतलासु विशेषतः ॥
अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः ।
गयाशीर्षे वटे श्राद्धं यो नः कुर्यात् समाहितः ॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥

'प्रभवेषु' नदीनामुत्पत्तिदेशेषु । 'सरिद्वरासु, संगमेषु' इति प्रस्तुत्य 'प्रभवेषु' इत्यभिधानात् । 'पुलिनं' नदीतोयोत्थितः प्रदेशः । 'प्रस्रवणं' निर्झरः । 'निकुञ्जो' लतादिवेष्टितप्रदेशः । 'उपवनं' गृहवाटिका । 'मनोज्ञं' रमणीयम् ।

शङ्खः

यद्ददाति गयास्थश्च प्रभासे पुष्करेषु च ।
प्रयागे नैमिषारण्ये सर्वमानन्त्यमुच्यते ॥

गङ्गायमुनयोस्तीरे पयोष्ण्यमरकण्टके ।[1]
नर्मदाबाहुदातीरे सर्वमानन्त्यमुच्यते ॥
कुरूणां च कुरुक्षेत्रे भृगुतुङ्गे हिमालये ।
सप्तर्षे वृष्णिकूपे च दत्तमक्षयमुच्यते ॥

[2]देवलः

श्राद्धस्य पूजितो देशो गया गङ्गा सरस्वती ।
कुरुक्षेत्रं प्रयागश्च च नैमिषं पुष्कराणि च ॥
नदीतटेषु तीर्थेषु शैलेषु पुलिनेषु च ॥
विविक्तेषु च तुष्यन्ति दत्तेनेह पितामहाः ।

'विविक्तं' विजनम् ॥

बृहस्पतिः [श्राद्ध, ६६-६७, ५१]

काङ्क्षन्ति पितरः पुत्रान्नरकापातभीरवः ।
गयां यास्यति यः कश्चित् सोऽस्मान् सन्तारयिष्यति ।
करिष्यति वृषोत्सर्गमिष्टापूर्तं तथैव च ।
पालयिष्यति वार्धक्ये श्राद्धं दास्यति चान्वहम् ॥
गयायां धर्मपृष्ठे च सरसि ब्रह्मणस्तथा ।
गयाशीर्षेऽक्षयवटे पितॄणां दत्तमक्षयम् ॥
ब्रह्मारण्यं धर्मपृष्ठं धेनुकारण्यमेव च ।
दृष्ट्वैतानि पितॄंश्चार्च्य वंशान् विंशतिमुद्धरेत् ॥

(1) शङ्खस्मृतावपि–
गङ्गायमुनयोस्तीरे पयोष्ण्यमरकण्टके ।
नर्मदावाहुदातीरे भृगुलिङ्गे हिमालये ॥
गङ्गाद्वारे प्रयागे च नैमिषे पुष्करे तथा ।
सन्निहत्यां गयायां च दत्तमक्षयतां व्रजेत् ॥
इति हेमाद्रिः, १६१–१६२

(2) हेमाद्रिः, १६१

वायुपुराणे [७७, ९६-९९, १०१-१०६, १०८-१०९]

[1]गयायां धर्मपृष्ठे च सरसि ब्रह्मणस्तथा ।
गयागृध्रवटे चैव श्राद्धं दत्तं महाफलम् ॥
भरतस्याश्रमे पुण्ये नित्यं पुण्यतमैर्वृते ।
मतङ्गस्य पदं तत्र दृश्यते सर्वमानुषैः[2] ॥
ख्यापितं धर्मसर्वस्वं लोकस्यास्य निदर्शनम् ।
एवं पञ्चवनं पुण्यं पुण्यकृद्भिर्निषेवितम् ॥
यस्मिन् पाण्डुविशालेति तीर्थं सद्यो निदर्शनम् ।
तृतीयायां तथा पादे [3]निश्चीवायाश्च मण्डले ॥
महाह्रदे च कौशिक्यां दत्तं श्राद्धं महाफलम् ।
मुण्डपृष्ठे पदं न्यस्तं महादेवेन धीमता ॥
बहून् वर्षगणांस्तप्त्वा तपस्तीर्थेषु दुश्चरम् ।
अल्पेनाप्यत्र कालेन नरो धर्मपरायणः ।
पाप्मानमुत्सृजत्याशु जीर्णां त्वचमिवोरगः ॥
नाम्ना कनकनन्देति तीर्थं [4]जगति विश्रुतम् ।
उदीच्यां मुण्डपृष्ठस्य ब्रह्मर्षिगणसेवितम् ॥
तत्र स्नात्वा दिवं [5]याति स्वशरीरेण मानवः ।
दत्तं चापि सदा श्राद्धमक्षयं समुदाहृतम् ॥
स्नात्वा ऋणत्रयं तत्र निक्षिणोति[6] नरोत्तमः ।
[7]मानसे सरसि स्नात्वा श्राद्धं निर्वर्तयेत्ततः ॥
उत्तरं मानसं गत्वा सिद्धिं प्राप्नोत्यनुत्तमाम् ।

(1) 'गङ्गायां' इति मु. पाठः (आनन्दाश्रमकोशे, २८८)
(2) 'मांसचक्षुषा' इति मु. पाठः, पृ. २७९
(3) 'निःस्वरे पावमण्डले ?' इति मु. पाठः
(4) 'त्रैलोक्यविश्रुतम्' इति मु. पाठः (पृ. २८९)
(5) 'यान्ति कामचारा विहङ्गमाः' इति मु. पाठः
(6) 'निक्रीणाति' इति मूलमातृकायाम्.
(7) मुद्रितवायुपुराणे न दृष्टोऽयमर्धः ।

तस्मिन्निर्वर्तयेच्छ्राद्धं यथाशक्ति यथाबलम् ॥
कामान्स लभते दिव्यान्मोक्षोपायांश्च कृत्स्नशः ॥

मत्स्यपुराणे [२२, १०-१२]

नन्दाथ ललिता तद्वत्तीर्थं मायापुरीषु च ।
तथा [1]चित्रपदं नाम ततः केदारमुत्तमम् ॥
गङ्गासागरमित्याहुः सर्वतीर्थमयं शुभम् ।
तीर्थं ब्रह्मसरस्तद्वच्छतद्रुसलिलोद्गमः[2] ॥

तथा [२२, १६-१८]

कृतशौचं महापुण्यं सर्वपापनिषूदनम् ।
यत्रास्ते नारसिंहस्तु स्वयमेव जनार्दनः ॥
तीर्थमिक्षुमती नाम पितॄणां दुर्लभं सदा ।
संगमे यत्र तिष्ठन्ति गङ्गायाः पितरस्सदा ॥

तथा [२२, २०]

यमुना देविका काली चन्द्रभागा दृषद्वती ।
नदी धेनुमती[3] पुण्या परा वेत्रवती तथा ॥

तथा [२२, २२-२६]

नीलकुण्डमिति ख्यातं पितृतीर्थं द्विजोत्तमाः ।
तथा [4]भद्रसरः पुण्यं सरो मानसमेव च ॥
मन्दाकिनी तथाऽच्छोदा विपाशा च सरस्वती ।
[5]तीर्थं मित्रपदं तद्वद्वैद्यनाथं महाफलम् ॥

(1) 'मित्रपदं' इति मुद्रितमात्स्ये, पृ. ३७
(2) 'सलिले ह्रदे' इति मु. मात्स्ये.
(3) 'वेणुमती' इति मु. मा.
(4) 'रुद्रसरः' इति पाठान्तरम्
(5) 'पूर्वमित्रपदं' इति . पृ. ३८

[1]प्रियानन्दी महाकालस्तथा कालञ्जरं शुभम् ।
वंशोद्भेदं हरोद्भेदं गङ्गोद्भेदं महालयम्[2] ॥
भद्रेश्वरं विष्णुपदं नर्मदाद्वारमेव च ॥
गयापिण्डप्रदानेन समान्याहुर्महर्षयः ॥

[तथा]–[२२, २७–२९]

ओंकारं पितृतीर्थं च कावेरी कपिलोदकम् ।
संभेदश्चण्डवेगायास्तथैवाऽमरकण्टकम् ॥
कुरुक्षेत्राच्छतगुणं तस्मिन् स्नानादिकं भवेत् ।
शुक्रतीर्थं च विख्यातं तीर्थं सोमेश्वरं परम् ॥
सर्वव्याधिहरं पुण्यं फलं कोटिशताधिकम् ।

तथा [२२, ३०–७६]

कायावरोहणं नाम तथा चर्मण्वती नदी ।
गोमती वरणा तद्वत्तीर्थमौशनसं भवम्[3] ॥
भैरवं भृगुतुङ्गं च गौरीतीर्थमनुत्तमम् ।
तीर्थं वैनायकं नाम [4]वत्सेश्वरमतः परम् ॥
परं तथा पापहरं पुण्या च तपती नदी ।
मूलतापी पयोष्णी च पयोष्णीसंगमस्तथा ॥
महाबोधिः पाटला च नागतीर्थमवन्तिका ।
तथा वेणानदी पुण्या महाशालस्तथैव च ॥
महारुद्रं महालिङ्गं दशार्णा च नदी शुभा ।
शतरुद्रा शताह्वा च तथा विष्णुपदं परम् ॥

(1) 'शिप्रानदी' इति मु. मा.
(2) 'महाफलम्' मु. मा.
(3) 'तीर्थमौशनसं परं' इति मु. मा., पृ. २८
(4) 'भद्रेश्वरमतः परम्' इति मु. मा.

अङ्गारवाहिका तद्वन्नदौ द्वौ शोणघर्घरौ ।
कालिका च नदी पुण्या वितस्ता च नदी शुभा ॥
एतानि पितृतीर्थानि शस्यन्ते स्नानदानयोः ।
श्राद्धमेतेषु यद्दत्तं तदनन्तफलं स्मृतम् ॥
द्रोणी वाटनदी [1]धारासरः क्षीरनदी तथा ।
द्वारका कृष्णतीर्थं च तथार्बुदसरस्वती ॥
नदी मणिमती नाम तथा च गिरिकन्यका ।
धूतपापं तथा तीर्थं समुद्रो दक्षिणस्तथा ॥
[2]गोकर्णो गजकर्णश्च तथा च पुरुषोत्तमः ।
एतेषु पितृतीर्थेषु श्राद्धमानन्त्यमुच्यते ॥
तीर्थं मेघकरं नाम स्वयमेव जनार्दनः ।
यत्र शार्ङ्गधरो विष्णुर्मेखलायां व्यवस्थितः ॥
तथा मन्दोदरीतीर्थं यत्र चम्पा नदी शुभा ।
तथा सामलनाथश्च महाशालवती[3] तथा ॥
पयोष्णीदक्षिणे तीरे देवदेवेश्वरं तथा ।
कोटीश्वरं तथा देव रेणुकायाः समीपतः ॥[4]
तत्र कोटं च साकोटं तथा जल्पेश्वरं महत् ।[5]
अर्जुनं त्रिपुरेशं च[6] सिद्धेश्वरमतः परम् ॥
[7]शैलेशं श्रीकरं तीर्थं नारसिंहमतः परम् ।
महेन्द्रं च महापुण्यं तथा श्रीरङ्गसंज्ञितम् ॥

(1) धारासरित्क्षीरनदी—मु. मा.
(2) This should come earlier, as in the printed *Mātsya*.
(3) 'महाशालनदी' मु. मा., ३८
(4) Missing in the printed *Mātsya*.
(5) 'चक्रवाकं (चित्रकूटं) चर्मकोट तथा जन्मेश्वरं महत्' इति मु. मा, ३८
(6) 'त्रिपुरश्चैव' इति मु. मा.
(7) 'श्रीशैलं शांकरं तीर्थं' इति मु. मा., ३८

एतेष्वपि सदा श्राद्धमनन्तफलमश्नुते ।[1]
दर्शनादपि चैतानि सर्वपापहराणि वै ॥
तुङ्गभद्रा नदी पुण्या तथा भीमरथी सरित् ।
भीमेश्वरं कृष्णवेणा कावेरी वञ्जुला नदी[2] ॥
नदी गोदावरी नाम त्रिसन्ध्या तीर्थमुत्तमम् ।
त्र्यम्बकं नाम तीर्थं तु सर्वतीर्थनमस्कृतम् ॥
यत्राऽऽस्ते भगवान् भीमः स्वयमेव जनार्दनः ॥[3]
श्राद्धमेतेषु सर्वेषु दत्तं कोटिगुणं भवेत् ।
स्मरणादपि पापानि [4]व्रजन्ति शतधा द्विजाः ॥
[5]श्रीपर्णी च नदी पुण्या व्यासतीर्थमनुत्तमम् ।
तथा मत्स्यनदी नाम शिवधारा तथैव च ।
[6]भवतीर्थं च विख्यातं पम्पातीर्थं तथैव च ॥
पुण्यं रामेश्वरं तद्वदेलापुरमलं तथा ।
[7]अङ्गारभूतं विख्यातमानर्तकमलम्बुसम् ।
आम्रातकेश्वरं चैव तद्वदेकाम्रकं परम् ।
गोवर्धनं हरिश्चन्द्रं [8]पुरश्चन्द्रं पृथूदकम् ॥
सहस्राक्षं हिरण्याक्षं तथा च कदली नदी ।
रामाधिवासस्तत्रापि तथा सौमित्रिसंज्ञकम् ॥[9]
इन्द्रनीलं महानादं तथा च प्रियमेलकम् ।
एतान्यपि सदा श्राद्धे प्रशस्तान्यधिकान्यपि ॥

(1) 'फलदं श्रुत'मिति मु. मा.
(2) 'कुड्मला नदी' इति मु. मा.
(3) 'भगवानीशः स्वयमेव त्रिलोचनः' इति मु. मा.
(4) नश्यन्तीति मु. मा, ३८
(5) 'श्रीपर्णी ताम्रपर्णी च जयतीर्थमनुत्तमम्' इति मु. मा. पाठः.
(6) 'भद्रतीर्थं च' मु. मा.
(7) 'अङ्गभूतं च विख्यातमामर्दकमल[मानन्दकमल]म्भुषम्' इति मु. मा.
(8) 'कृपचन्द्रं', 'पृथुचन्द्रं', 'पुरश्चन्द्रं' इति पाठभेदाः मुद्रितमात्स्ये द्रष्टाः
(9) 'सौमित्रिसङ्गमः', इति मु. मा.

एतेषु सर्वदेवानां सान्निध्यं पद्यते यतः ।[1]
दानमेतेषु सर्वेषु भवेत्कोटिशताधिकम् ॥
बाहुदा च नदी पुण्या तथा सिद्धवनं शुभम् ।
तीर्थं पाशुपतं नाम वटी पर्पटिका[2] तथा ॥
श्राद्धमेतेषु दत्तं च कोटिकोटिशतोत्तरम् ॥
तथैव पितृतीर्थं च यत्र गोदावरी नदी ।
युता लिङ्गसहस्रेण [3]सव्येतरजलावहा ॥
जामदग्न्यस्य तत्तीर्थं [4]रामायतनमुत्तमम् ।
प्रतीकस्य भयाद्भिन्ना यत्र गोदावरी नदी ॥
तीर्थं तद्धव्यकव्यानामप्सरोऽयुतसंयुतम् ।
श्राद्धाग्निकार्यं दानं च तत्र कोटिशताधिकम् ॥
तथा सहस्रलिङ्गं च राघवेश्वरमुत्तमम् ।
सेन्द्रफेना नदी पुण्या यत्रेन्द्रः खेदितः [5]पुरा ॥
निहत्य नमुचिं शक्रस्तपसा स्वर्गमाप्तवान् ।
तत्र दत्तं नरैः श्राद्धमनन्तफलदं भवेत् ॥
तीर्थं तु पुष्करं नाम सालग्रामं तथैव च ।
[6]शोणपातश्च विख्यातो यत्र वैश्वानरालयम् ॥
तीर्थं सारस्वतं नाम स्वामितीर्थं तथैव च ।
[7]मल्लन्दरा नदी पुण्या कौशिकी चन्द्रिका तथा ।
वैदर्भी चाऽथ वेगा[8] च पयोष्णी प्राङ्मुखा परा ॥

(1) 'दृश्यते' इति मु. मा.
(2) 'पार्वतिका', 'पर्वतिका', 'वर्वटिका' इति पाठभेदाः मु. मात्स्ये द्रष्टाः
(3) 'सर्वान्तरजलावहा' इति मु. मा., ३९
(4) 'क्रमादायातमुत्तमम्' इति मु. मा.
(5) 'पतितः पुरा' मु. मा.
(6) 'सोमपानं च' इति मु. मा.
(7) 'मलन्दरा' 'मिलिन्दना' इति पाठौ मु. मा. द्रष्टौ (मृ. ३९)
(8) 'वैरा च' इति मु. मा.

कावेरी चोत्तरा पुण्या तथा जालन्धरो गिरिः ।
एतेषु श्राद्धतीर्थेषु श्राद्धमानन्त्यमश्नुते ॥
लोहदण्डं तथा तीर्थं चित्रकूटस्तथैव च ।
विन्ध्ययोगश्च गङ्गायास्तथा [1]नन्दातटं शुभम् ॥
कुब्जाम्रं च तथा तीर्थमूर्वशीपुलिनं तथा ।
संसारमोचनं तीर्थं तत्रैव ऋणमोचनम् ॥
एतेषु पितृतीर्थेषु श्राद्धमानन्त्यमश्नुते ।
अट्टहासं महातीर्थं गौतमेश्वरमेव च ॥
तथा वसिष्ठतीर्थं च हारीतं तु ततः परम् ।
ब्रह्मावर्तं कुशावर्तं हयतीर्थं तथैव च ॥
पिण्डारकं च विख्यातं शङ्खोद्धारं तथैव च ।
घण्टेश्वरं च बिल्वं च नीलपर्वतमेव च ॥[1]
तथा च बदरीतीर्थं रामतीर्थं तथैव च ।
जयन्तं विजयं चैव शुक्रतीर्थं तथैव च ॥
श्रीपतेश्च तथा तीर्थं तीर्थं रैवतकं तथा ।[2]
वैकुण्ठतीर्थं च परं भीमेश्वरमथापि वा ।
अश्वतीर्थं च विख्यातमनन्तं श्राद्धदानयोः ॥
तीर्थं वेदशिरो नाम तथैवौघवती नदी ।
तीर्थं वसुप्रदं नाम छागलिङ्गं तथैव च ॥
एतेषु श्राद्धदातारः प्रयान्ति परमं पदम् ।
तीर्थं मातृगृहं नाम करवीरपुरं तथा ॥
[3]सप्तगोदावरीतीर्थं सर्वतीर्थेष्वनुत्तमम् ।
तत्र श्राद्धं प्रदातव्यमनन्तफलमीप्सुभिः ॥

(1) 'नदीतटं' इति मु. मा.

(2) The following additional verses are found in the printed *Mātsya* (p. 39)—

तथा च धरणीतीर्थं रामतीर्थं तथैव च ॥ तथा च बदरीतीर्थं गणतीर्थं तथैव च ।

(3) तथैव शारदातीर्थं भद्रकालेश्वरं तथा ।

तथा [२२, ८१]

एषु तीर्थेषु यच्छ्राद्धं तत्कोटिगुणमिष्यते ॥
तस्मात्तत्र प्रयत्नेन तीर्थे श्राद्धं समाचरेत् ॥

तथा

[1]कुर्याच्छ्राद्धमथैतेषु नित्यमेव यथाविधि ।
प्राग्दक्षिणदिशो गत्वा सर्वकामचिकीर्षया ॥[2]

अत्र श्राद्धदेशत्वेन कथितनानादेशीयतीर्थस्वरूपविशेषास्तत्तद्देशनिवासिभ्योऽधिगन्तव्याः ॥[3]

वायुपुराणे[4] [७८, २१-२३]

त्रिशङ्कोर्वर्जयेद्देशं सर्वं द्वादशयोजनम् ।
उत्तरेण महानद्या दक्षिणेन तु कीकटात् ॥
देशस्त्रैशङ्कवो नाम श्राद्धकर्मणि वर्जितः ।
कारस्कराः कलिङ्गाश्च सिन्धोरुत्तरमेव च ॥
[5]प्रणष्टाश्रमधर्माश्च देशा वर्ज्याः प्रयत्नतः ।

शङ्खः

म्लेच्छदेशे तथा रात्रौ सन्ध्यायां च विशेषतः ।
न श्राद्धमाचरेत् प्राज्ञो म्लेच्छदेशं न च व्रजेत् ॥

(1) मु. मात्स्ये नोपलब्धः ।

(2) Entire passage reproduced by श्राद्धप्रकाश, १४३–१४८.

(3) अत्र च श्राद्धे प्रशस्तत्वेन कीर्तितानां नानादेशीयतीर्थानां स्वरूपाणि तत्तद्देशवासिभ्योऽधिगन्तव्यानि । अत्र च तीर्थादिदेशेष्वानन्त्यादिश्रवणाद्गुणफलसंबन्धपरा एव तद्विधयो न तु तीर्थादीनामङ्गत्वपराः । अतश्च तदभावेऽपि न श्राद्धवैगुण्यमिति ध्येयम् ॥ (श्राद्धप्रकाशः, १४७)

(4) श्राद्धप्रकाशः १४७

(5) 'प्रणष्टाश्रमवर्णाश्च' इति मित्रमिश्राद्दतपाठः ।

## ॥ ६ ॥

# ॥ अथ हवींषि ॥

अत्र हविर्विशेषात्प्रीतिविशेषः । तत्र

मनुः [३, २६६–२७२]

यद्धविश्चिरकालाय [1]यच्चानन्त्याय कल्पते ।
पितृभ्यो विधिवद्दत्तं तत्प्रवक्ष्याम्यशेषतः ॥
तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा ।
दत्तेन मासं प्रीयन्ते[2] विधिवत्पितरो नृणाम् ॥
द्वौ मासौ मत्स्यमांसेन त्रीन् मासान् हारिणेन तु ।
औरभ्रेणाथ चतुरः शाकुनेनेह पञ्च वै ॥
षण्मासांश्छागमांसेन पार्षतेनाथ सप्त तु[3] ।
[4]अष्टावेणस्य मांसेन रौरवेण नवैव तु ॥
दशमासांस्तु तृप्यन्ति वराहमहिषामिषैः ।
शशकूर्मयोस्तु मांसेन मासानेकादशैव तु ॥
संवत्सरं तु गव्येन पयसा पायसेन वा ।
वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥
कालशाकं महाशल्काः खड्गलोहामिषं मधु ।
आनन्त्यायैव कल्पन्ते मुन्यन्नानि च सर्वशः ॥

"'औरभ्रं' मेषमांसम् । 'शाकुनं' पक्षिमांसम् । 'पृषतः' चित्रमृगः । 'एणः' कृष्णसारः । 'रुरुः' शम्बरः ।

(1) 'हविर्यच्चिरात्राय' इति मेधातिथिपाठः । 'चिरात्र 'शब्दो दीर्घकालवचनः इति च व्याचख्यौ ।

(2) 'तृप्यन्ति' इति मेधातिथिपाठः ।

(3) 'पार्षतेन च सप्त वै' इति मेधातिथिः ।

(4) 'अष्टावैणेयमांसेन' इति मेधातिथिः ।

'गव्यम्' इति पयोविशेषणम्। [1]'पयसा गव्येन संवत्सरम्' इति उशनोवचनात्। वार्ध्रीणसस्य स्वरूपं निगमे दर्शितम्–

[2]त्रिपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम्।
वार्ध्रीणसं तु तं प्राहुर्याज्ञिकाः पितृकर्मणि॥
कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहङ्गमः।
सर्वं वार्ध्रीणसं प्रोक्तमित्येषा नैगमी श्रुतिः॥

'महाशल्काः' मत्स्यविशेषाः, 'महाशल्किनो मत्स्याः' इति यमवचनात्। 'मुन्यन्नानि' नीवारादीनि॥

यमः[3]

शल्यकश्चतुरो मासान् रुरुः प्रीणाति पञ्च वै।
शशः प्रीणाति षण्मासान् कूर्मः प्रीणाति सप्त तु॥
अष्टौ मासान् वराहस्तु मेषः प्रीणाति वै नव।
माहिषं दश मासांस्तु गावयं रुद्रसम्मितान्॥

तथा

आनन्त्याय भवेद्दत्तं खड्गमांसं पितृक्षये।
पितृक्षयो गया ज्ञेया तत्र दत्तं महाफलम्॥

तथा

यत्किंचिन्मधुना युक्तं तदानन्त्याय कल्पते।
उपाकृतं तु विधिना मन्त्रेणान्नं तथाकृतम्॥

[4]'गावयं' गवयमांसम्। 'रुद्रसम्मितान्' एकादशसंख्यान्। 'उपाकृतं' मन्त्रवद्दर्भसंस्कृतम्। 'अन्नं तथाकृतं' उपाकृतमेव॥

(1) पयोविकारः पायसम्, दध्यादि। पयःसंस्कृत ओदनः प्रसिद्धः। (मेधातिथिः)

(2) पिबतो यस्य त्रीणि जलं स्पृशन्ति कर्णौ जिह्वा च, स त्रिभिः पिबतीति 'त्रिपिबः'। (मेधातिथिः)

(3) श्राद्धप्रकाशः, ५८.

(4) 'गवयो' गोसदृशः पशुः, तस्य मांसं 'गावयम्।'(श्राद्धप्रकाशः,५४)

देवलः[1]

तुष्यन्ति मत्स्यैर्द्वौ मासौ त्रीन् मासान् रुरुभिर्मृगैः ॥
शाकुनैश्चतुरो मासान् पञ्च तृप्यन्ति पार्षतैः ॥
शशैः षाण्मासिकी तृप्तिः कौर्मैः स्यात् साप्तमासिकी ।
अष्टौ मासान् वराहेण नव तृप्यन्त्यजे रुरौ[2] ।
दश माहिषमांसेन तृप्यन्त्येकादशाविकैः ॥

कात्यायनः[3]

अथ तृप्तिःग्राम्याभिरोषधीभिर्मासं तृप्तिः [आरण्याभिर्वा] तदलाभे मूलफलैरद्भिर्वा सहान्नेनोत्तरास्तर्पयन्ति । छागोस्रमेषा आलब्धाः शेषाणि क्रीत्वा लब्ध्वा वा स्वयं मृतानां वाहृत्य पचेत् । [मासद्वयं मात्स्यैः । त्रीन् मासान् हारिणमृगमांसेन ।] चतुरः शाकुनेन । पञ्च रौरवेण । षट् छागेन । सप्त कौर्मेण । अष्टौ वराहेण । नव मेषमांसेन । दश माहिषेण । एकादश पार्षतेन । [संवत्सरं गव्येन पायसेन पयसा वा । वार्ध्राणसस्य मांसेन च द्वादश वर्षाणि ।] अक्षया तृप्तिः खड्गः कालशाकं लोहितच्छागो मधु महाशल्का वर्षासु मघासु च श्राद्धं हस्तिच्छायायां च ॥

'उत्तराः' मूलफलादयः । 'उस्रः' अनड्वान् । 'आलब्धाः' कृतालम्भाः ॥[4]

(1) हेमाद्रिः, ५९४.

(2) 'अजेन च' इति हे. पाठः

(3) हेमाद्रिः, ५९०–५९१

(4) हेमाद्रिः, ५९०–५९१. Words in rectangular brackets, which are omitted in the text are supplied from Hemādri; प्रोक्षणादिसंस्कारपूर्वकं संज्ञापनं 'आलम्भः' । एतत् [छागोस्रमेषा] पशुत्रयव्यतिरिक्तानां तु पशूनां प्रोक्षणादिसंस्कारमन्तरेणापि, स्वयं परेण वा हतानां, क्रयाद्युपायसंपादितं मांसं श्राद्धादावुपयोजनीयम् ॥ (५९२)

विष्णुः [७०, १-१४]

[तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलैः] शाकैः श्यामाकैः प्रियङ्गुनीवारैः मुद्गैर्गोधूमैश्च मासं प्रीयन्ते । [द्वौ मासौ मत्स्यमांसेन । त्रीन् मासान् हारिणेन तु । चतुरश्चौरभ्रेण । पञ्च शाकुनेन । षट् छागेन ।] सप्त रौरवेण । अष्टौ पार्षतेन । नव गवयेन । दश माहिषेण । एकादश तूपरेणाजेन । संवत्सरं गव्येन पयसा तद्विकारैर्वा [अत्रापि पितृगीता गाथा भवन्ति ।]

कालशाकं महाशल्कं मांसं वार्ध्रीणसस्य च ।
विषाणवर्ज्या ये खड्गा आसूर्यं तान् लभेमहि ॥[2]
'तूपरः' शृङ्गोत्थानकालेऽपि शृङ्गरहितः ।

[2]पैठीनसिः

घृतेन मासं प्रीणाति । कालशाकेन द्विमासम् । यवाग्वपूपकृसरेण त्रिमासम् । मत्स्यैश्चतुरो मासान् । आजेन मांसेन पञ्च । पायसेन षण्मासान् । शाकुनेन सप्त मासान् । अष्टौ मासानैणेयेन । नव मासान् गव्येन । एकादशमासान् माहिषेण । द्वादशमासांश्छागेन । खड्गेन त्रयोदशमासान् । सर्वलोहेन च्छागेनानन्त्यमिति ॥

'तृप्ता भवन्ति' इत्यनुवृत्तौ—

[3]उशना

चतुरो मासान् कृष्णसारङ्गेण । अष्टौ मासान् वराहेण । नव रुरुणा । दश मेषेण ॥

(1) 'आसूर्यं' यावच्चन्द्रसूर्यादिपदार्थानामवस्थानं, तावत्कालं तान् वयं लभेमहीति पितरः प्रार्थयन्ते । (हेमाद्रिः, ५९५)

(2) हेमाद्रिः, ५९५

(3) हेमाद्रिः, ५९२

आपस्तम्बः [२, १६,२२-२६;२,१७,१-३]

तत्र द्रव्याणि तिलमाषा व्रीहियवा आपो मूलफलानि च। स्नेहवति त्वेवाऽन्ने तीव्रतरा [पितॄणां] प्रीतिर्द्राघीयांसं च कालम्। तथा धर्माहृतेन द्रव्येण तीर्थे प्रतिपन्नेन। संवत्सरं गव्येन प्रीतिः। भूयांसमतो माहिषेण। एतेन ग्राम्यारण्यानां पशूनां मांसं मेध्यं व्याख्यातम्। खड्गोपस्तरणे खड्गमांसेनाऽऽनन्त्यं कालम्। तथा शतबलैर्मत्स्यस्य मांसेन। वाघ्रीणसस्य च ॥[1]

'स्नेहवति' घृताद्यैः, तदलाभे तैलाद्यपि। 'तीव्रतरा' अतिशयवती। 'धर्माहृतेन' न्यायोपात्तेन। 'तीर्थे प्रतिपन्नेन' तीर्थयात्रा, तद्गतेन द्रव्येणेत्यर्थः। 'खड्गोपस्तरणेन' [खड्गचर्मनिर्मितासनेन] इति ॥'

शङ्खलिखितौ[2]

धर्मेण वित्तमादाय पितृभ्यो दद्यात्।

शङ्खः[3]

आम्रान् पालेवतानिक्षून् मृद्वीकाभव्यदाडिमान्।
विदार्यांश्च भरुण्डांश्च श्राद्धकाले प्रदापयेत् ॥
लाजान् मधुयुतान् दद्यात् सक्तून् शर्करया सह।
दद्याच्छ्राद्धे प्रयत्नेन शृङ्गाटबिसकेबुकान् ॥

'पालेवतं' जम्बीराकारं फलं 'वोठ' इति काश्मीरेषु प्रसिद्धम्। 'मृद्वीका' द्राक्षा। 'भव्यं' कर्मरङ्गम्।

(1) मेध्यग्रहणं प्रतिषिद्धानां मा भूदिति। 'शतबलिः' बहुशल्यको रोहिताख्यः। (हरदत्तः)

(2) हेमाद्रिः, ५२४

(3) तत्रैव, ५५०; अन्तिमश्लोकस्य पूर्वार्धः हेमाद्रौ न दृष्टः। कल्पतरुव्याख्यानं हेमाद्रिणा धृतम्।

'विदार्यान्' कन्दान् । 'भरुण्डाः' जलप्रभवाः कन्दविशेषाः इति मञ्जरीकारः[1] । 'केवुकं' आर्द्रकसदृशः कन्दविशेषः । केवुकस्य निषेधस्तु आरण्यशाकविषयः ॥

हारीतः

क्षत्रियैस्तु मृगयायां विधिना यदुपाहृतम् ।
श्राद्धकाले प्रशंसन्ति सिंहव्याघ्रहतं च यत् ॥

मनुः [३, २५८]

मुन्यन्नानि पयः सोमो मांसं यच्चानुपस्कृतम् ।
[2]अक्षारलवणं चैव प्रकृत्या हविरुच्यते ॥

'अनुपस्कृतं' अविकृतमिति यावत् । 'अक्षारलवणं' ऊषरमृत्तिकाकृतलवणम् । यदि तु क्षारं च तल्लवणं चेति द्वन्द्वानन्तरं नञ् संबध्यते तदोभयवृत्तित्वात् समासार्थगौरवं स्यात् ॥

महाभारते [अनु, १३५,८]

वर्धमानतिलं श्राद्धमक्षय्यं मनुरब्रवीत् ॥

तथा

सर्वकामैः स यजते यस्तिलैर्यजते पितॄन् ॥
न चाकामेन दातव्यं तिलश्राद्धं कथंचन ॥
'वर्धमानतिलं' तिलबहुलम् ।

वायुपुराणे[3]

श्यामाकैरिक्षुभिश्चैव पितॄणां सर्वकामिकम् ।
कुर्यादाग्रयणं यस्तु स शीघ्रं सिद्धिमाप्नुयात् ॥

(1) गोविन्दराजकृतस्मृतिमञ्जरी ?

(2) 'अक्षारलवणं'—अत्र संदिह्यते—"किं द्वन्द्वगर्भो नञ्समासः, उत नञ्समास एव ।" इति मेधातिथिः । "बिडादेः क्षारादन्यलवणं सामुद्रं सैन्धवं वा, प्रकृत्या स्वभावेन स्थितम्' इति नारायणः (मनुटीकासंग्रहे, ३००)

(3) हेमाद्रिः, ५३८

श्यामाका हस्तिनामानो विद्धि तान् यज्ञनिःसृतान्।
प्रसातिका प्रियङ्गुश्च ग्राह्याः स्युः श्राद्धकर्मणि ॥
एतान्यपि समानि स्युः श्यामाकानां सदा गुणैः।
कृष्णमाषास्तिलाश्चैव श्रेष्ठाः स्युर्यवशालयः ॥
महायवा व्रीहियवास्तथैव च मधूलिका ।
कृष्णा श्वेता लोहिता च ग्राह्याः स्युः श्राद्धकर्मणि ॥
बिल्वामलकमृद्वीकाः पनसाम्रातदाडिमम्।
भव्यपारावताक्षोटखर्जूराम्रफलानि च ॥
कसेरुः कोविदारश्च तालकन्दं तथा बिसम्।
तमालं शतकन्दं च गन्धालू शीतकन्दकम् ॥
कालेयं कालशाकं च सुनिषण्णं सुवर्चला।
मांसं शाकं दधि क्षीरं चञ्चुर्वेत्राङ्कुरस्तथा ॥
कट्फलं कङ्कणी द्राक्षा लकुचं मोचमेव च ।
कर्कन्धुर्भीरकं वारं तिण्डुकं मधुसाह्वयम् ॥
वैकङ्कतं नालिकेरं शृङ्गाटकपरूषकम्।
पिप्पली मरिचं चैव पटोलं बृहतीफलम् ॥
सुगन्धि मत्स्यमांसं च कलायाः सर्व एव च।
एवमादीनि चान्यानि स्वादूनि मधुराणि च ॥
नागरं चात्र वै देयं दीर्घमूलकमेव च ॥

'प्रसातिका' प्रसाटीति मध्यदेशप्रसिद्धं धान्यम् । 'महायवाः' वण्डयवाः ॥ 'मधूलिका' यावनालविशेषः ॥ अस्या एव विशेषणं 'कृष्णा श्वेता लोहिता च' इति । 'अक्षोटं' गिरिसंभवपीलुफलम्। 'कोविदारः' श्वेतकाञ्चनारविशेषः। 'तालकन्दं' तालमूलीति प्रसिद्धम् । 'शतकन्दं' शतावरी। 'शीतकन्दकं' शालूकम् । 'कालेयं' करालाख्यं शाकमिति गोविन्दराजः[1]। 'सुनिषण्णं' चाङ्गेरीसदृशं शाकं

(1) The reference is important as it definitely places Govindarāja before Lakṣmīdhara.

जलप्रभवम्। 'सुवर्चला' सूर्यभक्ता। 'चञ्चुः' चेञ्चु इति प्रसिद्धं शाकम्। 'कट्फलं' कट्फलवृक्षमेव। 'कङ्कणी' अम्लरसा द्राक्षा। 'मोचं' कदलीफलम्। 'कर्कन्धुः' बदरीविशेषः।

आदित्यपुराणे

मधूकं रामठं चैव कर्पूरं मरिचं गुडम्।
श्राद्धकर्मणि शस्तानि सैन्धवं त्रपुसं तथा॥

'रामठं' हिङ्गु।

मार्कण्डेयपुराणे [३२,१०][1]

यवव्रीहिसगोधूमतिला मुद्गाः ससर्षपाः।
प्रियङ्गवः कोविदारा निष्पावाश्चातिशोभनाः॥

'निष्पावा' वल्लाः शिम्बिसदृशा दक्षिणापथे प्रसिद्धाः।

वायुपुराणे [८०, ४२-४८]

[2]भक्षाण्येभ्यः करम्भं च इष्टका घृतपूरकाः।
[3]कृसरं मधु सर्पिश्च पयः पायसमेव च॥
[4]स्निग्धमुष्णं च यो दद्यादग्निष्टोमफलं लभेत्।
दधि गव्यं च संसृष्टं भक्षान्नानाविधानपि॥
[5]दत्त्वा न शोचति श्राद्धे वर्षासु च मघासु च।
घृतेन भोजयेद्विप्रान् घृतं भूमौ समुत्सृजेत्॥
शर्कराः क्षीरसंयुक्ताः पृथुका नित्यमक्षयाः।

(1) जीवानन्दमुद्रितकोशे
(2) 'भक्ष्यान् धानाः करम्भांश्च' इति मुः वायुपु, २९८
(3) 'कृसरान् मधुपर्कं च' इति मु. वा. पु.
(4) 'स्निग्धांश्चापूपांश्च' इति मु. वा. पु.
(5) 'तदन्नं शोचति श्राद्धे' इति मु. वा. पु. २९९

स्युश्च संवत्सरं प्रीता [1]झषकैर्मेषकैणकैः ॥
सक्तून् लाजांस्तथापूपान् कुल्माषान् व्यञ्जनैः सह ।
सर्पिस्सिद्धानि सर्वाणि दध्ना संस्कृत्य भोजयेत् ॥
श्राद्धेषु तानि यो दद्यात्पितरः प्रीणयन्ति तम् ॥

'करम्भो' दधिमिश्राः सक्तवः । 'घृतं भूमौ समुत्सृजेत्' तथा घृतेन पात्रं पूरणीयं यथा भूमौ घृतं क्षरतीत्यर्थः । 'पृथुकाः' चिपिटाः ॥

मत्स्यपुराणे

यत्किंचिन्मधुना मिश्रं गोक्षीरघृतपायसैः ।
दत्तमक्षयमित्याहुः पितरः पूर्वदेवताः ॥

हारीतः

तिलैः श्राद्धं पुष्टिकामः कुर्यात् । अपूपै ऋद्धिकामः । घृतगुडतिलैस्तेजस्कामः । सौभाग्यकाम आरोग्यकामो वा परमान्नेन । कृसरमांसदधियवागूभिः सर्वकामः ॥

अत्र श्राद्धद्रव्येषु यत्र फलविशेषसंयोगस्तत्र गुणफलार्थिनः प्रवृत्तिः । यत्र गुणसंयोगो नास्ति तेषां नित्यवदङ्गत्वात्तैर्विना श्राद्धाङ्गानिष्पत्तिरेव । सामान्यतो विहितस्याभ्यवहरणीयद्रव्यस्य यथालाभमुपकल्पितस्य श्राद्धस्वरूपसंपादकत्वम् । तदलाभे त्वविहिताप्रतिषिद्धं विहितसदृशमुपादातव्यम् । यत्तु श्राद्धप्रकरणनिषिद्धं तत्प्रतिनिधित्वेनापि नोपादेयम् । यत्र तु फलविशेषसंयोगस्तस्य श्राद्धस्वरूपसंपादकत्वे सति तत्तद्विशेषनिष्पादकत्वमपि । यत्तु निषिद्धं गोमहिषमांसादि फलविशेषार्थं च विहितं तत्फलार्थिनैवोपादेयम् । नातदर्थिना श्राद्धस्वरूपमात्रसंपादकत्वेन ।

(1) 'प्रीताः कृसरैर्मधुरेण च' इति मु. वा. पु.

यत्त्वत्रैव विहितं निषिद्धं च माहिषमांसादि कार्यकारिविहि-
तद्रव्याभावे तदुपादेयम्। यत्तु तस्मिन्नेव द्रव्ये पितृतृप्ति-
कालाल्पीयस्त्वं भूयस्त्वं तत्तस्यैव द्रव्यावस्थाविशेषापेक्षया
व्यवस्थितं बोद्धव्यम्।

## ॥ ६ आ ॥

## ॥ अथ विवर्ज्यानि ॥

तत्र हारीतः

अथ वर्ज्यानि। पालङ्क्यानालिकापौतीकशिग्रुसृमुक-वार्ताकभूस्तृणकपेलुमाषमसूरकृतलवणानि च श्राद्धे न दद्यात् ॥[1]

'सृमुकं' जलप्रभवखादिरशाकम्। 'भूस्तृणकपेलू ग्राम्यारण्यौ शाकविशेषौ काश्मीरेषु प्रसिद्धौ' इति हारीतभाष्यकारः। माषनिषेधोऽत्र गौरमाषविषयः, 'माषास्तिलाश्च' इति वायुपुराणे माषाणां विधानात् ॥

विष्णुः [७९, १७-१८]

पिप्पलीसृमुकभूस्तृणशिग्रुसर्षपसुरसा[सर्जकसुव-र्चल]कूष्माण्डालाबुवार्ताकपालङ्क्यो[पोदकी]तण्डुलीयक-कुसुम्भपिण्डालुकमहिषीक्षीराणि वर्जयेत्। राजमाषा-सुरीपर्युषितकृतलवणानि ॥[2]

'आसुरी' राजसर्षपः ॥

(1) 'नालिका' नाम दीर्घनाला शिरोभागावस्थितस्वल्पपल्लवा जला-शयोद्भवा प्रसिद्धनालदला वल्लिः। 'पौतीक' पौतीक आपादकेति पर्यायाभिधेयं शाकम्। 'कपेलः' आरण्यविशेषः काश्मीरेषु प्रसिद्धः इति हारीतभाष्यकारः। 'कृतलवणानि' कृत्रिमलवणानि ॥ (हेमाद्रि, ५५६)

(2) Words in brackets supplied from the printed *Viṣṇusmṛti*.

शङ्खः

भूस्तृणं सुरसं शिग्रुं पालङ्क्यां सृमुकं तथा।
कूष्माण्डालाबुवार्ताककोविदारांश्च वर्जयेत् ॥
पिप्पलीं मरिचं चैव तथा वै पिण्डमूलकम्।
कृतं च लवणं सर्वं वंशाग्रं च विवर्जयेत् ॥
राजमाषान् मसूरांश्च कोद्रवान् कोरदूषकान्।
लोहितान् वृक्षनिर्यासान् श्राद्धकर्मणि वर्जयेत् ॥

'सुरसं' तुलसी। 'वंशाग्रं' वंशकीरम्[1]। 'कोरदूषकः' वनकोद्रवः।

महाभारते[2]

अश्राद्धेयानि धान्यानि कोद्रवाश्चणकास्तथा ॥[3]
हिङ्गु द्रव्येषु [4]सर्वेषु अलाबू लशुनस्तथा ॥
[5]पलाण्डुसौभाञ्जनकौ तथा गृञ्जनकादयः।
[6]कुक्कुण्डकान्यलाबूनि कृष्णं लवणमेव च ॥
ग्राम्यवाराहमांसं च यच्चैवाप्रोक्षितं भवेत्।
कृष्णाजं जीरकं चैव शीतपाकी तथैव च ॥
अङ्कुराद्यास्तथा वर्ज्या इह शृङ्गाटकानि च ॥
वर्जयेल्लवणं सर्वं तथा जम्बूफलानि च।
अवक्रुष्टावरुदितं तथा श्राद्धेषु वर्जयेत ॥[7]

(1) 'वंशाग्रं' वंशाङ्कुरः, न त्वग्रमात्रम् ॥ (हेमाद्रिः, ५५९)
(2) अनुशासनपर्व, १३८, ३८–४१, (कुम्भघोण मु. पु.)
(3) 'पुलकास्तथा' इति तत्रैव
(4) 'शाकेषु मूलानां लशुनं' इति मु. पा.
(5) 'पलाण्डुः सौभाञ्जनकः' इति मु. पा.
(6) 'कूष्माण्डजात्यलाबुं च' इति मु. पा.
(7) 'पुलकाः' असंपूर्णतण्डुलयुक्तधान्यानि। 'हिङ्गुद्रव्येषु' शाकादिसंस्कारद्रव्येषु। 'सौभाञ्जनकः' शिग्रुः। 'शीतपाकी' शाकविशेषः ॥ (नीलकण्ठः)

'कुक्कुण्डकानि' कवकानि छत्राकसमानप्रकृतिद्रव्याणि पिण्डोपमानि । 'कृष्णं लवणं' सौवर्चलम् । 'कृष्णाजं' कृष्णजीरकम् । 'शीतपाकी' काकजङ्घा । 'हिङ्गु द्रव्येषु' द्रव्येषु मध्ये हिङ्गु अश्राद्धेयमित्यर्थः । अयं तु निषेधः स्वरूपेण दीयमानस्य । यत्तु 'मधूकं रामठं च' इत्यादित्यपुराणे[1] विधानं तद्द्रव्यान्तरसंस्कारकत्वेन । एवं मरीचादावपि ॥

वाराहपुराणे

अकृताग्रयणं चैव धान्यजातं द्विजोत्तम ।
राजमाषानणूंश्चैव मसूरांश्चैव वर्जयेत् ॥

हारीतः

विषछद्महतं मांसं [2]व्याधतिर्यग्घतं च यत् ।
न प्रशंसन्ति वै श्राद्धे यच्च मन्त्रविवर्जितम् ॥

वायुपुराणे

वर्जनीयानि वक्ष्यामि श्राद्धकर्मणि नित्यशः ।
करम्भं यानि चान्यानि रसगन्धहतानि च ॥
अवेदोक्ताश्च निर्यासा लवणान्यौषराणि च ।
दुर्गन्धि फेनिलं चैव तथा वै पल्वलोदकम् ॥
लभते यत्र गौस्तृप्तिं नक्तं यच्चैव गृह्यते ।
आविकं मार्गमौष्ट्रं च सर्वमेकशफं च यत् ।
माहिषं चामरं चैव पयो वर्ज्यं विजानता ॥

(1) मधूकं रामठं चैव कर्पूरं मरिचं गुडम् ।
श्राद्धकर्मणि शस्तानि सैन्धवं त्रपुसं तथा ॥ इति आदित्यपुराणे [हेमाद्रिः, ५६५]

(2) 'व्याधिभिर्जग्धितं च यत्' इति हेमाद्रिणा धृतपाठः । (५८२) 'विषेण' 'छद्मना' कूटयन्त्रादिप्रकारेण हतस्य, तथा 'व्याधिभिः' सिंहव्याघ्रव्यतिरिक्तश्वापदैश्च हतस्य पशोः यन्मांसं, यच्च मन्त्रवर्जितम्, तच्छ्राद्धादौ 'न प्रशंसन्ति' न मन्यन्ते । (हेमाद्रिः)

'पल्वलं' अल्पसरः ॥

मार्कण्डेयपुराणे ॥[३२, १८, १६, १७,]

पित्र्यर्थं मे प्रयच्छस्वेत्युक्त्वा यच्चाप्युपाहृतम् ।
वर्जनीयं सदा सद्भिस्तत्पयः श्राद्धकर्मणि ॥
दुर्गन्धि फेनिलं चैव तथाल्पप्रदरोदकम् ।
यच्च सर्वार्थमुत्सृष्टं यच्चाभोज्यनिपानजम् ॥
तद्वर्ज्यं सलिलं तात सदैव पितृकर्मणि ॥

'अभोज्यनिपानजं' पतितादिकारितपुष्करिण्यादिजलम् ।

मत्स्यपुराणे

मसूरशणनिष्पावराजमाषकुलुत्थकाः ॥
पद्मबिल्वकधत्तूरपारिभद्राढरूषकाः ।
अदेयाः पितृकार्येषु पयश्चाजाविकं तथा ॥
कोद्रवो ह्यारवरटकपित्थमधुकाकसी ।
एतान्यपि न देयानि पितृभ्यः प्रियमिच्छता ॥

'पारिभद्रं' फरहद इति प्रसिद्धम् ।

ब्रह्मपुराणे

द्विः सिन्नं परिदग्धं च तथैवाग्रावलेहितम् ।
शर्कराकीटपाषाणैः केशैर्यच्चाप्युपद्रुतम् ॥
पिण्याकं मथितं चैव तथातिलवणं च यत् ।
सिद्धाः कृताश्च भक्ष्याश्च प्रत्यक्षलवणीकृताः ॥
वाग्भावदुष्टाश्च तथा दुष्टैश्चोपहतास्तथा ।
वाससा चावधूतानि वर्ज्यानि श्राद्धकर्मणि ॥
दधि शाकं तथा भक्ष्यं शुक्तं चौषधिवर्जितम् ।
वर्जयेच्च तथा चान्यान् सर्वानभिषवानपि ॥

'अग्रावलेहितं' उपभुक्ताग्रभागम् । 'सिद्धाः कृताश्च' इत्यादेरयमर्थः-येषु सिद्धेषूत्तरकालं प्रत्यक्षं लवणप्रक्षेपः कृतः।

## ॥ ७ ॥

## ॥ अथ ब्राह्मणपरीक्षा ॥

तत्र [1]मनुः, शातातपश्च द्वितीये

तत्र ये भोजनीयाः स्युर्ये च वर्ज्या द्विजोत्तमाः ।
यावन्तश्चैव यैश्चान्नैस्तान् प्रवक्ष्याम्यशेषतः ॥
दूरादेव परीक्षेत ब्राह्मणं वेदपारगम् ।
तीर्थं तद्धव्यकव्यानां प्रदाने सोऽतिथिः स्मृतः ॥[2]
सहस्रं हि सहस्राणामनृचां यत्र भुञ्जते ।
एकस्तान् मन्त्रवित् प्रीतः सर्वानर्हति धर्मतः ॥
ज्ञानोत्कृष्टाय देयानि कव्यानि च हवींषि च ।
न हि हस्तावसृग्दिग्धौ रुधिरेणैव शुध्यतः ॥[3]

'दूरात्परीक्षा' पितृपितामहाद्यभिजनपरीक्षा। तीर्थमिव 'तीर्थं' फलप्राप्तिहेतुरित्यर्थः । 'प्रदाने सोऽतिथिः' अस्मिन् प्रदाने सोऽतिथिवत्पूज्यः ।

(1) मनु., ३,१२४,१३०–१३२.

(2) न वेदपारग इत्येव भोजयितव्यः । किं तर्हि 'दूरात् परीक्षेत' निपुणतो मातापितृवंशद्वयपरिशुद्धिविज्ञानम् । 'तीर्थं तद्धव्यकव्यानाम्'—तीर्थमिव तीर्थं येनोदकं ग्रहीतुमवतरन्ति तत्तीर्थम् । येन यथा मार्गेणोदकार्थिनो गच्छन्त उदकं लभन्ते एवं तादृशेन ब्राह्मणेन हव्यकव्यानि पितॄन् गच्छन्ति इति प्रशंसा । अन्यस्मिन्नपि इष्टापूर्तदाने ब्राह्मणोऽतिथिः ॥' (मेधातिथिः)

(3) रुधिरदिग्धौ हस्तौ रुधिरेणापमृज्यमानावधिकतरं रज्येते, न निर्मलौ भवतः, एवमविद्वान् ब्राह्मणः भोज्यमानः पितॄनधो नयतितराम् ॥ (मेधातिथिः)

यमः

पूर्वमेव परीक्षेत [1]ब्राह्मणान् वेदपारगान्।
शरीरप्रभवैर्दोषैर्विशुद्धांश्चरितव्रतान्॥
दूरादेव परीक्षेत ब्राह्मणान् वेदपारगान्।
[2]इष्टान् वा यदि वाऽनिष्टांस्तांस्तु तत्कालमानयेत्॥

'पूर्वं' निमन्त्रणादिति शेषः॥ इष्टाऽनिष्टावत्रापाततः प्रीत्यप्रीतिविषयौ। अरिमित्रयोः 'नारिं न मित्रम्' इति निषेधात्॥

मनुः [३, १४९]

[3]न ब्राह्मणं परीक्षेत दैवे कर्मणि धर्मवित्।
पित्र्ये कर्मणि संप्राप्ते परीक्षेत प्रयत्नतः॥

'श्रोत्रियादीन् भोजयेत्। दुर्वालादींश्च न भोजयेत्' इति प्रक्रम्य[4]—

गौतमः [१५, २९-३०]

हविष्षु चैवम्। दुर्वालादीन् श्राद्ध एकैके॥

[5]'हविष्षु' हव्येषु, दैवेष्वित्यर्थः।

(1) 'पूर्वं' श्राद्धादिनात्प्रागेव। 'शरीरदोषाः' काणत्वकुणित्वादयः। 'व्रतानि' ब्रह्मचर्यादीनि॥(हेमाद्रि, ५०८)

(2) 'स्थविरांस्तपस्विनो दान्तान् इष्टान् वा यदि वेतरान्' इति हेमाद्रिः पठति।

(3) 'तत्तीर्थश्राद्धविषयम्' तद्वचनस्य तीर्थश्राद्धप्रकरणे दर्शयिष्यमाणत्वात्" इति श्राद्धकल्पलता, ३८॥ यथा पद्मपुराणे—'तीर्थेषु ब्राह्मणान्नैव परीक्षेत कदाचन। अन्नार्थिनमनुप्राप्तं भोजयेन्मनुशासनात्॥"—(श्राद्धचन्द्रिका, २१)

(4) न भोजयेत् (गौतम, १५, १२) स्तेन—क्लीब...दुर्वाल...(१७—'दुर्वालः' शिपिविष्टः, हीनप्रजनन इत्येके, खलतिरित्येके' (मस्करी)

(5) दुर्वालादारभ्य येऽनुक्रान्तास्तान् श्राद्ध एव भोजयेत्, न तु दैवे। एकग्रहणात् न तु गौतमः, सम्भवासम्भवकृतो विकल्पः॥ (मस्करी) मस्करिव्याख्या हेमाद्रिणा धृतः (५११)

मनुः[३, ११८]

[1]श्रोत्रियायैव देयानि हव्यकव्यानि दातृभिः ।
अर्हत्तमाय विप्राय तस्मै दत्तं महाफलम् ॥

वसिष्ठः[३, ८]

[2]अश्रोत्रियाय यद्दत्तं पितॄन्नैति न देवताः ॥

मनुः, शातातपश्च द्वितीये [मनु, ३, १३३, १३५, १३६]

दातॄन् प्रतिगृहीतॄंश्च कुरुते फलभागिनः[3] ।
विद्वद्भ्यो दक्षिणा दत्ता विधिवत्प्रेत्य चेह च ॥
यत्नेन भोजयेच्छ्राद्धे बह्वृचं वेदपारगम् ।
शाखान्तगं वोप्यध्वर्युं छन्दोगं वा समाप्तिगम् ॥[4]
[5]एषामन्यतमो यस्य भुञ्जीत श्राद्धमर्चितः ।
पितॄणां तस्य तृप्तिः स्याच्छाश्वती साप्तपौरुषी ॥
'समाप्तिगं' समस्तशाखाध्यायिनम् ।

[6]यमः

बह्वृचो वा त्रिसौपर्णश्छन्दोगो ज्येष्ठसामगः ।
पञ्चाग्निर्वा चतुर्वेदी त्वथवा ब्रह्मशीर्षकः ॥

(1) छन्दोमात्राध्यायी 'श्रोत्रियः' (कुल्लूकः) । 'हव्यानि' श्राद्धाङ्ग-भोजनानि विश्वान् देवानुद्दिश्य यानि विहितानि । 'कव्यानि' पितृभ्य उद्दिश्य यानि विहितानि । 'अर्हत्तमः' महाकुले जातो विद्यावृत्तसंपन्नश्च । (मेधातिथिः)

(2) श्रोत्रियाय च देयानि हव्यकव्यानि नित्यशः । अश्रोत्रियाय दत्तं हि पितॄन्नैति न देवताः ॥ इति मुद्रितवासिष्ठे (ed. Führer)

(3) प्रशंसैषा । 'ईदृशमेतद्विदुषे दानं यत्प्रतिग्रहीताप्यदृष्टफलभाग्भवेत् सत्यपि दृष्टे किं पुनर्दाता' इति ॥ (मेधातिथिः)

(4) अन्ये तु आथर्वणिकनिषेधार्थमिदं श्लोकं मन्यन्ते । (मेधातिथिः)

(5) एषां त्रयाणां त्रैविद्यानामन्यतमो भोजनीयः । एतदुक्तं भवति—समानशाखाध्यायिनो नानाशाखाध्यायिनो वा भोजनीयाः ॥ (मेधातिथिः)

(6) हेमाद्रिः, ३८४.

आत्मविद्याङ्गविच्चैव ब्रह्मदेयासुतस्तथा ।
[1]सर्वे च ते यथावत्स्युरेकदेशोऽपि वा भवेत् ॥
त्रयः परेऽवराश्चैव आत्मा तत्रैव सप्तमः ।
ते सप्तपूरुषाः सर्वे तदन्नमुपभुञ्जते ॥[2]

'त्रिसौपर्णः' 'चतुर्वर्गा युवतिः सुपेषा' इत्यादि ऋक्त्रये सुपर्णपदोपलक्षितः । 'ज्येष्ठसामगः' ज्येष्ठसामाध्येता । 'पञ्चाग्निः' पञ्चाग्निप्रकाशकमन्त्राध्येता । 'ब्रह्मशीर्षकः' अथर्वशिरसोऽध्येता । 'ब्रह्मदेया' ब्राह्मविवाहेनोढा ॥

बृहस्पतिः

यद्येकं भोजयेच्छ्राद्धे छन्दोगं तत्र भोजयेत् ।
ऋचो यजूंषि सामानि त्रितयं तत्र विद्यते ॥
अटेत पृथिवीं सर्वां सशैलवनकाननाम् ।
यदि लभ्येत पित्रर्थे साम्नामक्षरचिन्तकः ॥
ऋचा तु तृप्यति पिता यजुषापि पितामहः ।
पितुः पितामहः साम्ना [3]छन्दोगोऽभ्यधिकस्ततः ॥

(1) 'एते सर्वे' इति हेमाद्रिपाठः

(2) 'त्रिसुपर्णः' ऋग्यजुषोर्य एकदेशस्तदध्ययनाङ्गं व्रतं च तदस्यास्त्यसौ 'त्रिसौपर्णः' । 'पञ्चाग्निः' गार्हपत्याहवनीयदाक्षिणाग्निसभ्यावसथ्याः अग्नयो यस्य सः । 'आत्मवित्' आत्मतत्त्ववेत्ता । 'एकदेशोऽपि' इत्युक्तानां सर्वेषामसंभवे यावन्तो लभ्यन्ते तावन्तो ग्राह्याः । 'परे' चतुर्थात् पुरुषात् प्रभृतयः, 'अवरे' चतुर्थात्पूर्वे त्रयः पितृपितामहप्रपितामहाः । 'आत्मा' यजमानः, एते 'सप्तपुरुषाः' विशिष्टपात्रे दत्तमन्नं भुञ्जते । यथा पित्रादीनां षण्णां पुरुषाणां श्राद्धमुपकारकं भवति, एवं यजमानस्यापि परलोके विशिष्टफलोत्पादकं भवति ॥ (हेमाद्रिः, ३८४)

(3) 'छन्दोगोऽध्यापकस्ततः' इति मूलकोशे । 'आधिकस्ततः' इति हेमाद्रिपाठः (३८५)

यमशातातपौ

छन्दोगं भोजयेच्छ्राद्धे वैश्वदेवे च बह्वृचम् ।
पुष्टिकर्मणि चाध्वर्युं शान्तिकर्मण्यथर्वणम् ॥[1]

शातातपः

भोजयेद्यस्त्वथर्वाणं दैवे पित्र्ये च कर्मणि ।
[2]अनन्तमक्षयं चैव फलं तस्येति वै श्रुतिः ॥
यस्त्वन्यं भोजयेच्छ्राद्धे विद्यमानेष्वथर्वसु ।
निराशास्तस्य गच्छन्ति देवताः पितृभिः सह ॥
तस्मात्सर्वप्रयत्नेन श्राद्धकाले त्वथर्वणम् ।
भोजयेद्धव्यकव्येषु पितॄणां च तदक्षयम् ॥

मनुः [३, १२४–१२५]

ज्ञाननिष्ठा द्विजाः केचित्तपोनिष्ठास्तथा परे ।
[3]स्वाध्यायज्ञाननिष्ठाश्च कर्मनिष्ठास्तथा परे ॥
ज्ञाननिष्ठेषु कव्यानि प्रतिष्ठाप्यानि यत्नतः ।
[4]हव्यानि तु यथाश्राद्धमेतेष्वेव चतुर्ष्वपि ॥
अश्रोत्रियः पिता तस्य पुत्रः स्याद्वेदपारगः ।
[[5]अश्रोत्रियो वा पुत्रः स्यात् पिता स्याद्वेदपारगः ॥]
ज्यायांसमनयोर्विद्याद्यस्य स्याच्छ्रोत्रियः पिता ।
मन्त्रसंपूजनार्थं तु सत्कारमितरोऽर्हति ॥

(1) पुष्ट्यर्थं कर्म 'पुष्टिकर्म' । अरिष्टोपशमनार्थं यत्क्रियते तच्छान्तिकर्म । (हेमाद्रिः, ३८५)

(2) 'अनन्तं' अपर्यवसानम् । 'अक्षयं' अकृशम् । (हेमाद्रिः, ३८५)

(3) 'तपःस्वाध्यायनिष्ठाश्च' इति मेधातिथिपाठः,

(4) 'हव्यानि तु यथान्यायं' इति मेधातिथिपाठः

(5) मूलमातृकायां त्रुटितः श्लोकार्धः ।

याज्ञवल्क्यः [१, २१९,२२१]

अग्र्याः सर्वेषु वेदेषु श्रोत्रियो ब्रह्मविद्युवा ।
वेदार्थविज्ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णकः ॥
कर्मनिष्ठास्तपोनिष्ठाः पञ्चाग्निर्ब्रह्मचारिणः ।
पितृमातृपराश्चैव ब्राह्मणाः श्राद्धसंपदः ॥

'अग्र्याः' प्रकृष्टाः । 'त्रिमधुः' ऋग्वेदैकदेशस्तद्व्रतं च ।[1] तद्योगात् पुरुषोऽप्यभिधीयते ।

भोजयेदित्यनुवृत्तौ गौतमः [१५, ९-११]

श्रोत्रियान् वाग्रूपवयःशीलसंपन्नान् । युवभ्यो दानं प्रथमम् । एके पितृवत् ॥

'श्रोत्रियान्' छन्दोऽध्यायिनः। 'वाक्संपन्नान्' संस्कृतभाषिणः । 'रूपसंपन्नान्' मनोज्ञवपुषः । 'वयःसंपन्नान्' अबालान् । 'शीलसंपन्नान्' सम्यक्प्रणिहितमनोवाक्कायान् । वयःसंपन्नेष्वपि 'युवभ्यो दानं' 'प्रथमं' प्रधानम् । अयं हि प्रथमः कल्पो यद्युवभ्यो दानमित्यर्थः । 'एके पितृवत्' यद्वयस्काः पित्रादयः प्रमीतास्तद्वयस्कान् भोजयेदित्येके मन्यन्ते ॥[2]

वसिष्ठः [११, १६-१७]

[अपरपक्ष ऊर्ध्वं चतुर्थ्याः] पितृभ्यो दद्यात् । पूर्वेद्युर्ब्राह्मणान् सन्निपात्य यतीन् गृहस्थान् साधून् वाऽपरिणतवयसोऽविकर्मस्थान् श्रोत्रियानशिष्यानन्तेवासिनः ॥

'सन्निपात्य' सन्निधाय । 'साधून्' क्षीणदोषान् । आश्रमस्थानन्यानपि 'अविकर्मस्थान्' अकुत्सितकर्मणः ।

(1) हेमाद्रिः—परिशेषखण्डे, ३९५
(2) सपिण्डीकरणे यदेकोद्दिष्टं तद्विषयमिदं वेदितव्यम् (मस्करी)

'अशिष्यानन्तेवासिनः' अध्ययनं परिसमाप्य गुरुकुल-निवृत्तान् ॥

**कात्यायनः**

तदहर्ब्राह्मणानामन्त्रयेत् । पूर्वेद्युर्वा । स्नातकानेके । यतीन् गृहस्थान् साधून् वा । श्रोत्रियाननवद्यान् स्वकर्मस्थान् । अभावेऽपि शिष्यान् साचारान् ॥[1]

**आपस्तम्बः** [२,१७,१०]

तुल्यगुणेषु वयोवृद्धः श्रेयान् द्रव्यकृशश्चेप्सन् ।
तुल्यगुणेष्वेव दरिद्रः श्राद्धीयद्रव्यार्थी श्रेयानित्यर्थः ॥

**मनुः** [४,३१]

वेदविद्याव्रतस्नातान् श्रोत्रियान् गृहमागतान्[2] ।
पूजयेद्धव्यकव्याभ्यां विपरीतांस्तु वर्जयेत् ॥

[3]**यमः**

वेदविद्याव्रतस्नाताः श्रोत्रिया वेदपारगाः ।
स्वधर्मनिरताः क्षान्ताः क्रियावन्तस्तपस्विनः ॥
तेभ्यो हव्यं च कव्यं च प्रशान्तेभ्यः प्रदीयते ।
न वेदविक्रयकृतः स्वधर्मच्छिद्रदर्शिनः ॥

(1) कृतसमावर्तनाकृतविवाहः 'स्नातकः' । येषां पितृतः मातृतश्च 'अवद्यं' दोषो नास्ति ते 'अनवद्याः' । 'स्वकर्मस्थाः' स्वाश्रमविहितश्रौतस्मार्तकर्मनिरताः ॥ (हेमाद्रिः, ३८९)

(2) 'गृहमेधिनः' इति मेधातिथिकुल्लूकादयः पठन्ति; गृहमागतानिति नन्दिनीपाठः ॥ 'गृहमेधिनः' गृहस्थाः । 'विपरीताः' अस्नातकाः वर्ज्याः । विविधाः स्नातकाः गृह्यन्ते । तत्र 'वेदस्नातकाः' अधीतवेदाः । 'विद्यास्नातकाः' विद्यार्थजिज्ञासानिवृत्ताः । व्रतानि 'षट्त्रिंशदाब्दिकम्' इत्यादीनि । सत्यामपि वेदतदर्थजिज्ञासासमाप्तौ न तावत्येव स्नानं किं तर्हि षट्त्रिंशदब्दादिकालः पूरयितव्य इति पक्षः ॥ (मेधातिथिः)

(3) हेमाद्रिः, ३८१–३८२.

आपस्तम्बः [२, १७, ११]

शुचीन् मन्त्रवतस्सर्वान् सर्वकृत्येषु भोजयेत् ॥[1]

पैठीनसिः

प्रयताय शुचये सर्वत्र [देयं] हव्यं कव्यं च । तस्माच्छुचिरिति विज्ञायते ॥[2]

मत्स्यपुराणे

सर्वज्ञो वेदवित् सत्री ज्ञानविद्याकुलान्वितः ।
पुराणवेत्ता धर्मज्ञः प्राज्ञः स्वाध्यायकृत्परः ॥
शिवभक्तः पितृपरः सूर्यभक्तोऽथ वैष्णवः ।
ब्राह्मणो योगविच्छान्तो विजितात्माऽथ शीलवान् ॥
भोजयेच्चापि दौहित्रं यत्नतः श्वशुरं गुरुम् ।
विट्पतिं मातुलं बन्धुमृत्विगाचार्यसोमपान् ॥

'विट्पतिः' जामाता ॥

स्कन्दपुराणे

कुलश्रुताभ्यां संयुक्तादलुब्धस्तु विशिष्यते ।
[ताभ्यामपि च विप्राभ्यां चिरवासी विशिष्यते ॥][3]

यमः

नक्षत्रतिथिपुण्याहमुहूर्तान् मङ्गलानि च ।
न निर्दिशन्ति ये विप्रास्तैर्भुक्तं ह्यक्षयं भवेत् ॥

(1) एकान्तेऽपि विविधप्रातिषेधानुसारिणः शुचयः, तान् । 'मन्त्रवतः' अधीतवेदान्, 'सर्वकृत्येषु' श्रौतेषु गार्ह्येषु स्मार्तेषु च कर्मसु दैवेषु पित्र्येषु मानुषेषु च 'भोजयेत्' ॥ (हरदत्तः)

(2) 'प्रयताय' संयताय । 'शुचये' बाह्याभ्यन्तरशौचयुक्ताय । 'सर्वत्र' जनने मरणे देवभोजनादौ च । अयमर्थः श्रुतौ विज्ञायते । (हेमाद्रिः, ३८०)

(3) Supplied from Aparārka, p. 443; 'चिरवासी' विज्ञातशीलो यद्वा गुरुकुले चिराक्लिष्टो भवतीति ॥ (अपरार्कः)

## ॥ ८ ॥

## ॥ पङ्क्तिपावना: ॥

देवलः

ब्राह्मणेष्वप्यपाङ्क्तेयान् हव्यकव्येषु वर्जयेत् ।
परीक्ष्य बहुधा विप्रानाहरेत् पङ्क्तिपावनान् ॥

तत्र मनुः [३, १७३-१७६]

अपङ्क्त्योपहता पङ्क्तिः पाव्यते यैर्द्विजोत्तमैः ।
तान्निबोधत कात्स्न्र्येन द्विजाग्र्यान् पङ्क्तिपावनान् ॥
अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च ।
श्रोत्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः ॥
त्रिणाचिकेतः पञ्चाग्निस्त्रिसौपर्णः षडङ्गवित् ।
ब्रह्मदेयानुसन्तानो [1]धर्मविज्ज्येष्ठसामगः ॥
वेदार्थवित् प्रवक्ता च ब्रह्मचारी सहस्रदः ।
शतायुश्चैव विज्ञेया ब्राह्मणाः पङ्क्तिपावनाः[2] ॥

'त्रिणाचिकेतः' अध्वर्युवेदभागस्तद्व्रतं च । तद्योगात पुरुषोऽपि तथा ॥[3]

(1) 'ज्येष्ठसामग एव च' इति मेधातिथिपाठः । 'छन्दोगो ज्येष्ठसामगः' इति नन्दिनी पठति ।

(2) पवनः पावनस्त्रेता यस्य पञ्चाग्नयो गृहे ।
सायं प्रातः प्रदीप्यन्ते स विप्रः पङ्क्तिपावनः ॥ इति हारीतः.

(3) त्रिणाचिकेताख्यो वेदविभागोऽध्वर्यूणाम्—'पीतोदका जग्धतृणाः' इत्यादिः । तदध्ययनसम्बन्धात् पुरुषोऽत्र त्रिणाचिकेता उच्यते । ( मेधातिथिः) 'त्रिणाचिकेतोऽध्वर्युवेदभागस्तद्व्रत च' इति कुल्लूकः ।

यमः

ये सोमपा विरजसो धर्मज्ञाः शान्तबुद्धयः ।
व्रतिनो नियमस्थाश्च ऋतुकालाभिगामिनः ॥
पञ्चाग्निरप्यधीयानो यजुर्वेदविदेव तु ।
बह्वृचश्च त्रिसौपर्णस्त्रिमधुर्वाथ यो भवेत् ॥[1]
त्रिणाचिकेतो [2]विरजाश्छन्दोगो ज्येष्ठसामगः ।
[3]अथर्वशिरसोऽध्येता सर्वे ते पङ्क्तिपावनाः ॥
शिशुरप्यग्निहोत्री च न्यायविच्च षडङ्गवित् ।
मन्त्रब्राह्मणविच्चैव यश्चान्यो धर्मपाठकः ॥
ऋषिव्रती ऋषीकश्च[4] तथा द्वादशवार्षिकः[5] ।
ब्रह्मदेयासुतश्चैव गर्भशुद्धः सहस्रदः[6] ॥
चान्द्रायणव्रतचरः सत्यवादी पुराणवित् ।
निष्णातः सर्वविद्यासु शान्तो विगतकल्मषः ॥
गुरुदेवाग्निपूजासु प्रसक्तो ज्ञानतत्परः ।
विमुक्तः सर्वतो धीरो ब्रह्मभूतो द्विजोत्तमः ॥
अनमित्रो न चाऽमित्रो मैत्रश्चात्मविदेव च ।
स्नातको जप्यनिरतः सदा पुष्पफलप्रदः ॥[7]
ऋजुर्घृणी [8]क्षमी दान्तः शान्तः सत्यव्रतः शुचिः ।
वेदज्ञः सर्वशास्त्रज्ञ उपवासपरायणः ॥

(1) 'त्रिमधुः' ऋग्वेदैकदेशः तद्व्रतं च (हेमाद्रि, ३९५)
(2) विरजा नाम मन्त्रविशेषस्तदध्ययनात् पुरुषोऽपि 'विरजाः ।' (हे)
(3) 'अथर्वशिरो' नाम अथर्ववेदैकदेशः (हे)
(4) ऋषीकः' ऋषेः किञ्चिदूनगुणः । 'ऋषेः किञ्चिद्गुणैर्न्यूनं ऋषीक इति कीर्तितः' इति सुमन्तुस्मरणात् [हेमाद्रि, ३९६]
(5) 'द्वादशवार्षिकः' द्वादशवर्षवेदव्रतचारी ।
(6) 'सहस्रदः' गोसहस्रद इति मेधातिथिः ।
(7) 'पुष्पफलप्रियः', 'पुष्पबलिप्रियः' इति पाठान्तरौ ।
(8) 'घृणी' दयालुः । 'क्षमी' इति हेमाद्रिणादृतपाठः (३९५)

गृहस्थो ब्रह्मचारी च चतुर्वेदविदेव च ।[1]
[2]वेदविद्याव्रतस्नाता ब्राह्मणाः पङ्क्तिपावनाः ॥
ब्रह्मचर्यासु निरता ये कृशाः कृशवृत्तयः ।
अत्युत्क्रान्तास्त्वधर्मेभ्यस्ते द्विजाः पङ्क्तिपावनाः ॥
[3]सत्रिणो नियमस्थाश्च ये विप्राः श्रुतिसंगताः[4] ॥
प्राणिहिंसानिवृत्ताश्च ते द्विजाः पङ्क्तिपावनाः ।
अग्निहोत्ररताः शान्ताः कृपावन्तोऽनसूयकाः ॥
ये प्रतिग्रहनिःस्नेहास्ते द्विजाः पङ्क्तिपावनाः ।
[5]सत्यवन्तश्च धीराश्च नित्यं दानपराश्च ये ॥
मङ्गलाचारयुक्ताश्च ते द्विजाः पङ्क्तिपावनाः ।
एते वै भूतले देवाः पूर्वं देवैर्विनिर्मिताः ॥
यत् किञ्चित् पितृदैवत्यमेभ्यो दत्तं तदक्षयम् ।
दूरादेव परीक्षेत ब्राह्मणांश्चरितव्रतान् ॥
स्थविरांस्तपस्विनो[6] दान्तान् निष्णातान् यदि वेतरान् ।
[7]तान्सर्वान् भोजयेच्छ्राद्धे साधुभिः सन्निमन्त्रयेत् ॥

तथा[8]

विद्वांसः सुव्रताः शान्ता ब्राह्मणाः पङ्क्तिपावनाः ।
तैर्भुक्तं व्रजते देवांस्तैर्भुक्तं व्रजते पितॄन् ॥

(1) एते द्विजातयः पुण्याः पाङ्क्तेयाः संप्रकीर्तिताः ।
नियतं तारयन्त्येव हव्यकव्ये च योजिताः ॥
इति हेमाद्रिणा धृतः श्लोकोऽत्र न दृष्टः (पृ. ३९५)

(2) हेमाद्रिः, ३९८

(3) अत्र मन्त्रिण इति वा पाठः । तस्मिन् पक्षे मन्त्रिणो गायत्र्यादिमन्त्रजपनिरताः (हेमाद्रिः, ३९८)

(4) 'श्रुतिसम्मताः' इति हेमाद्रिपाठः ।

(5) Hemādri wrongly brings in place of this half-verse that higher up beginning with सत्रिणो नियमस्थाश्च, which he repeats.

(6) हेमाद्रिः, ५०८. दान्तानिष्टान् वा यदि वेतरानिति तेनादृतपाठः

(7) हेमाद्रौ न दृष्टः ।

(8) हेमाद्रिः, ३९९ ।

'ऋषीकः' ऋषेः किंचिदूनः। 'द्वादशवार्षिकः' द्वादश वर्षाणि वेदव्रतचारी। 'सहस्रदः' गोसहस्रद इति मेधातिथिः। 'विमुक्तः सर्वतः' ऋणादिति शेषः। 'अनमित्रः' शत्रुरहितः। 'न चाऽमित्रः' न कस्यापि शत्रुः। 'मैत्रः' मैत्रीवतः। 'घृणी' कृपालुः ॥[1]

[2]शङ्खः ॥

ब्रह्मदेयानुसन्तानो ब्रह्मदेयाप्रदायकः।
ब्रह्मदेयापतिर्यश्च ब्राह्मणाः पङ्क्तिपावनाः ॥
यजुषां पारगो यश्च साम्नां यश्चापि पारगः।
अथर्वशिरसोऽध्येता ब्राह्मणाः पङ्क्तिपावनाः ॥
नित्यं यागपरो विद्वान् समलोष्टाश्मकाञ्चनः।
ध्यानशीलो यतिर्विद्वान् ब्राह्मणाः पङ्क्तिपावनाः ॥

हारीतः

[3] स्थितिरविच्छिन्नवेदवेदिताऽयोनिसंकरत्वमार्षेयत्वं चेति कुलगुणाः। [वेदो]वेदाङ्गानि धर्मोऽध्यात्मं विज्ञानं

(1) Comments reproduced by Hemādri.
(2) हेमाद्रिः, ३९९
(3) हेमाद्रिः, ३९२—upto 'द्वादशोभयतः'—अस्यार्थः—'सन्ततिरूपेण चिरकालावस्थानं स्थितिः' इति स्मृतिचन्द्रिकाकारः। हरिहरस्त्वाह—'शास्त्रोक्तवर्णाश्रमादिधर्मेष्ववस्थानमापद्यपि ततोऽप्रच्यवनं स्थितिः।' यदाहुः—अयाच्याप्रचलनममार्गे चाप्रवर्तनम्। आपद्यपि यतो धैर्यं स गुणः स्थितिरुच्यते ॥ इति ॥ जातिवाद्विप्रबन्धेन स्मर्यते चरणं कुले। तद्वेदनमविच्छिन्नवेदवित्ता प्रकीर्तिता ॥ विजातीयायाम् अपत्यानुत्पादनेन असंकीर्णयोनित्वम् 'अयोनिसङ्करम्।' स्वीयप्रवरगतर्षिज्ञातृत्वम् 'आर्षेयत्वम्।' 'धर्मः' मन्वादिधर्मशास्त्रम्। 'अध्यात्मं' आत्मविवेकशास्त्रम्। अधीताविस्मरणं 'स्थितिः'। एतेषां षण्णां श्रवणं 'श्रुतम्।' ब्रह्मणि साधुत्वं 'ब्रह्मण्यता।' अमायया देवपितृकर्मणामनुष्ठानं 'देवपितृभक्तता'। जीवतोः शुश्रूषणं 'पितृभक्तता'। विगलितरागद्वेषता 'समता'। सर्वजनहृद्यचारित्रत्वं 'सौम्यता।' वागादिभिः परपीडाराहित्यम् 'अपरोपतापिता।' परदोषानाविष्करणम् 'अनसूयता।'

स्थितिश्चेति षड्विधं श्रुतम् । ब्रह्मण्यता देवपितृभक्तता समता सौम्यताऽपरोपतापिताऽनसूयता मृदुताऽपारुष्यं मैत्रता प्रियवादित्वं कृतज्ञता शरण्यता प्रशान्तिश्चेति त्रयोदशविधं शीलम् । क्षमा दमो दया दानमहिंसा गुरुपूजनं शौचं स्नानं जपो होमस्तपः स्वाध्यायः सत्यवचनं संतोषो दृढव्रतत्वं चेति षोडशगुणं वृत्तम् । कुलीनाः श्रुतवन्तः शीलवन्तो व्रतस्थाः सत्यवादिनोऽव्यङ्गाः पाङ्क्तेयाः । [1]द्वादशोभयतः श्रोत्रियाः त्रिणाचिकेतस्त्रिमधुस्त्रिसौपर्णस्त्रिशीर्षा ज्येष्ठसामगः पञ्चाग्निः षडङ्गविद् रुद्रजापी तूर्ध्वरेता ऋतुकालाभिगामी तत्त्वविच्चेति पङ्क्तिपावना भवन्ति ॥ अथात्रोदहरन्ति—

पचनः पाचनस्त्रेता यस्य पञ्चाग्नयो गृहे ।
सायंप्रातः प्रदीप्यन्ते स विप्रः पङ्क्तिपावनः ॥

अकाठिनहृदयत्वं 'मृदुता' । 'कलहविरहित्वम्' अपारुष्यम् । 'प्रसन्नमनस्कता' मैत्रता । साधुकारिणां अनुमोदनं 'प्रियवादिता ।' उपकारसंप्रतिपत्तिः 'कृतज्ञता ।' रक्षितृत्वे साधुः 'शरण्यः' तस्य भावः 'शरण्यता ।' विद्याद्यनुत्सेकः 'प्रशान्तिः ।' यथाविधि स्वस्य स्वत्वनिवृत्तिपूर्वकं परस्वत्वापादनं 'दानम् ।' विशिष्टमन्त्रावृत्तिः 'जपः' । देवतोद्देशेन प्रक्षेपान्तः स्वत्वत्यागो 'होमः ।' 'सन्तोषः' वितृष्णता । स्वीकृतव्रतापरित्यागः 'दृढव्रतत्वम् ॥' (हेमाद्रिः, ३९४)

(1) हेमाद्रि, ४०० 'दशोभयतः' इति । 'दशोभयतः श्रोत्रियाः' इत्यनेन याज्ञवल्क्यस्मृत्युक्ता मातृतः पितृतोऽपि दशपुरुषशुद्धिरभिहिता । रुद्रशिरो वैश्वानरशिरोऽथर्वशिरश्चेति त्रयाणां शीर्ष्णामध्येता 'त्रिशीर्षा ।' 'रुद्रजापी' 'नमस्ते रुद्रमन्यव' इत्यादिरुद्रध्यानजपपरः । ऊर्ध्वमेव रेतो यस्य सः 'ऊर्ध्वरेताः' स च नैष्ठिकब्रह्मचारी । 'तत्त्ववित्' आत्मतत्त्वज्ञः । पञ्चयज्ञाद्यर्थमन्नं पचतीति 'पचनः' आवसथ्यः । पाचयतीति 'पाचनः' सभ्यः । गार्हपत्य - आहवनीय - दाक्षिणाग्निरिति अग्नित्रयं 'त्रेता' । एते पञ्चाग्नयो यस्य गृहे दीप्यन्ते । वेदव्रताचरणपूर्वकम् अर्थज्ञानपर्यन्तं गृहीतवेदः 'स्नातकः', तमेतं शमदमादिभिः गुणैरुपेतं सहस्रसंख्यकभोक्तृद्विजपरिकल्पितपङ्क्तिपावनत्वात् 'सहस्रसम्मितं' इत्याहुः । स एव पञ्चाग्नित्वादिगुणैरुपेतः 'शतसाहस्रः', लक्षपरिमितपङ्क्तिपावन इत्यर्थः । 'अनृचां' वेदरहितानाम् ॥ (हेमाद्रिः, ४००–४०१)

सहस्रसंमितं प्राहुः स्नातकं पूर्ववद्गुणैः ।
पञ्चाग्न्यादिगुणैर्युक्तः शतसाहस्र उच्यते ॥
अनूचां यदि वा कृत्स्नां पङ्क्तिं योजनमायताम् ।
पुनाति वेदविद्विप्रो नियुक्तः पङ्क्तिमूर्धनि ॥

द्वादश वक्ष्यमाणा उभयतः श्रोत्रियादयः । 'पचनः' आवसथ्याग्निः । 'पाचनः' सभ्योऽग्निः । 'पूर्ववद्गुणैः' पूर्ववद्गुणैर्युक्तः ॥

[1]शङ्खलिखितौ

अथ पाङ्क्तेया वेदवेदाङ्गवित् पञ्चाग्निरनूचानो व्यवहारी[2] श्रोत्रियस्त्रिणाचिकेतस्त्रिमधुस्त्रिसौपर्णो ज्येष्ठसामगः [3]सन्ध्यास्नायी वेदपरः सदाग्निको मातृपितृशुश्रूषु[4]र्धर्मशास्त्रविदिति ॥

'अनूचानः' प्रासङ्गप्रवचनस्याध्येता । 'व्यवहारी' शास्त्रानुष्ठानशीलः । 'सदाग्निकः'[5] अविच्छिन्ननित्यकृत्यः' ।

वसिष्ठः [३,१९]

[त्रिणाचिकेतः] पञ्चाग्निस्त्रिसुपर्णश्चतुर्मेधी वाजसनेयी षडङ्गविद्ब्रह्मदेयानुसन्तानश्छन्दोगो ज्येष्ठसामगो मन्त्रब्राह्मणविद्यश्च[6] स्वधर्मानधीयते । यस्य [च]

(1) हेमाद्रिः, ३९१

(2) अत्र 'व्यवहारी'स्थाने हेमाद्रौ (३९१) 'सांख्ययोगोपानिषद्धर्मशास्त्रविच्छ्रोत्रियः' इत्यधिकः पाठः ।

(3) 'सन्ध्यास्नायी'स्थाने 'सांख्ययोगोपनिषद्धर्मशास्त्राध्यायी' इति हेमाद्रिणा धृतः पाठः (३९१)

(4) 'धर्मशास्त्ररतिः' इति हेमाद्रिपाठः ।

(5) 'सदाग्निकः' नित्यमग्निहोता (हेमाद्रिः)

(6) 'यश्च धर्ममधीते' इति हेमाद्रिपाठः (४०१); 'यश्च धर्मानधीते' इति मुद्रितवासिष्ठे (पृ. ११)

दशपुरुषं मातृपितृवंशः श्रोत्रियो [वि]ज्ञायते विद्वांसः स्नातकाश्च ते पङ्क्तिपावना भवन्ति॥

'चतुर्मेधी' चातुर्मास्ययाजी। [1]तत्र हि चत्वारो मेधा वैश्वदेवादयः क्रियन्ते॥

उशना

तत्र ब्राह्मणो वेदविद्याव्रतस्नातकः पञ्चपुरुषपारंपर्यादविखण्डितचारित्र[2]मर्यादस्त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णश्छन्दोविज्ज्येष्ठसामगः शतवर्षोऽलुप्तधर्माध्ययनः मन्त्रप्रभृति[3]जाप्यप्रवचनाध्यायपरः ऋतुकालाभिगामी छन्दसा शुद्धदशपुरुषः स्नातक इति पङ्क्तिपावनाः॥

विष्णुः[७३, १-२१]

अथ पङ्क्तिपावनाः। त्रिणाचिकेतः। पञ्चाग्निः। ज्येष्ठसामगः। वेदपारगः। वेदाङ्गस्याप्येकस्य पारगः। पुराणेतिहासव्याकरणपारगः। [धर्मशास्त्रस्याप्येकस्य पारगः]। तीर्थपूतः। यज्ञपूतः। [तपःपूतः]। सत्यपूतः। दानपूतः[4]। मन्त्रपूतः। गायत्रीजपनिरतः। ब्रह्मदेयानुसंतानः। त्रिसौपर्णी। जामाता। दौहित्रश्चेति पात्रम्। विशेषेण च योगिनः[5]। अत्र पितृगीता गाथा भवति--

अपि स्यात् स कुलेऽस्माकं भोजयेद्यस्तु योगिनम्।
विप्रं श्राद्धे प्रयत्नेन येन तृप्यामहे वयम्॥

(1) तत्र हि चत्वारो मेधा भवन्ति। ज्योतिष्टोमयाजी वा। एवंरूपो वाजसनेयीति संबन्धः। 'विद्वांसः' इति बहुवचनं वैदुष्यस्यानेकरूपत्वार्थम्॥ (हेमाद्रिः, ४०२)

(2) 'मर्यादस्त्रिसुपर्णोऽङ्गविज्ज्येष्ठसामगः' इति हेमाद्रिणा धृतपाठः(४०२)

(3) 'जाप्यप्रवचनपाठ्यपारगो' हे. पाठः

(4) 'दानपूतः' is missing in Jolly's *Viṣṇusmṛti*, p. 196

(5) 'विशेषेण वयोन इति' इह हेमाद्रिणा धृतपाठः (४०३)

**मत्स्यपुराणे**

यस्तु व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम् ।
सामस्वरविधिज्ञश्च पङ्क्तिपावनपावनाः ॥[1]
अष्टवर्षा तु या दत्ता श्रुतशीलसमन्विते ।
सा गौरी तत्सुतो गौरः पङ्क्तिपावनपावनः ॥

**वायुपुराणे**

यतिस्तु सर्वविप्राणां सर्वेषामग्रभुग्भवेत् ।
इतिहासपञ्चमान् वेदान् यः पठेद्द्विजसत्तमः ॥
[2]अनन्तरं यते सोऽयं नियोक्तव्यो विजानता ।
त्रिवेदोऽनन्तरं तस्य द्विवेदस्तदनन्तरम् ।
एकवेदस्ततः पश्चान्नित्याध्यायी ततः परम् ॥

**ब्रह्मपुराणे**

षडङ्गविज्ज्ञानयोगी यज्ञतत्त्वज्ञ एव च ।
अयाचितार्थी विप्रो वा श्राद्धकल्पविदेव च ॥[3]
अष्टादशानां विद्यानामेकस्यापि तु पारगः ।
त्रिविशुद्धस्त्रिसौपर्णी पञ्चाग्निर्ज्येष्ठसामगः ॥

(1) हेमाद्रिः, ४०४

(2) अत्र हेमाद्रिणा धृतार्धश्लोक आहृतः । उदयपुरमातृका तु 'अनन्तावितथा योगा नियोक्तव्या विजानतः' इति पठति ॥ 'सर्वविप्राणां' ब्रह्मचारिगृहस्थवानप्रस्थानाम् । 'सर्वेषां' त्रिमधुत्रिसुपर्णत्रिणाचिकेतानां यो द्विजसत्तमः सेतिहासांश्चतुरो वेदानधीते सोऽयं यतेरनन्तरं (पश्चात्) नियोजनीयः । 'नित्याध्यायी' अधीयमानवेदः । (हेमाद्रिः, ४२०)

(3) षडङ्गवित् ज्ञानयोगी योगतत्त्वज्ञ एव च ।
अयाचिताशी विप्रो यः श्राद्धकर्मणि भोजयेत् ॥

इति हेमाद्रिणा धृतःपाठः । (४१०) "समाधिशब्दवाच्यशुद्धात्मपरामर्शरूपयोगभूमिकानिपुणो 'ज्ञानयोगी' इत्युच्यते ॥" (हे. ४११)

चान्द्रायणैः पराकैर्वा नियमैर्यस्तु संस्कृतः ।
बार्हस्पत्यं नीतिशास्त्रं शब्दविद्यां च वेत्ति यः ॥
इतिहासपुराणैश्च यः पवित्रीकृतः सदा ॥
अकृत्यमपि कुर्वाणः स पवित्रशताद्वरः ।
बहुनात्र किमुक्तेन इतिहासपुराणवित् ॥
अथर्वशिरसोऽध्येता तावुभौ पितृभिः पुरा ।
तपः कृत्वा तु योगात्तु प्रथितौ पितृकर्मणि ॥

[1]वायुपुराणे

गृहस्थानां सहस्रेण वानप्रस्थशतेन च ॥
ब्रह्मचारिसहस्रेण योगी त्वेको विशिष्यते ॥
नास्तिको वा विकर्मा वा संकीर्णस्तस्करोऽपि वा ।
नान्यत्तु [2]कारणं दाने योगिष्वाह प्रजापतिः ।
पितरस्तस्य तुष्यन्ति सुवृष्टेनेव कर्षकाः ॥
पुत्रो वाप्यथवा पौत्रो [3]ध्यायिनं यस्तु भोजयेत् ॥

अथ मनुः [३, १४७-१४८]

एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः ।
अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः ॥
मातामहं मातुलं च स्वकीयं श्वशुरं गुरुम् ।
दौहित्रं [4]विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत् ॥

(1) हेमाद्रि, ४१३
(2) 'कारणं' इति हेमाद्रिपाठः ; तारणं—उ.
(3) 'ध्यानिनं' इति हे.
(4) 'विट्पतिः' जामाता ।

**पङ्क्तिपावनानन्तरं[1]—**

**बौधायनः** [२,१४,३–४]

**तदभावे रहस्यवित् । ऋचो यजूंषि सामानीति श्राद्धस्य महिमा । तस्मादेवंविधं सपिण्डमप्याशयेत् ॥[2]**

**आपस्तम्बः** [२,१७,४–६]

**भोजयेद्ब्राह्मणान् ब्रह्मविदो योनिगोत्रमन्त्रान्तेवास्यसंबन्धान्[3] । गुणहान्यां तु परेषां समुदितः सोदर्योऽपि भोजयितव्यः । एतेनाऽन्तेवासिनोऽपि व्याख्याताः[4] ॥**

**'न भोजयेद्' इत्यनुवृत्तौ—**

**गौतमः** [१५,१९–२१]

**शिष्यांश्चैके सगोत्रांश्च । भोजयेदूर्ध्वं त्रिभ्यः । गुणवन्तम् ॥[5]**

**वसिष्ठः** [११,१८]

**शिष्यानपि गुणवतो भोजयेत् ॥[6]**

(1) बौधायन, १४,२–'इति पङ्क्तिपावनाः'

(2) 'रहस्यं' अरण्ये पठितव्यो ग्रन्थः, यस्तमर्थतो ग्रन्थतश्च वेत्ति सोऽपि पङ्क्तिपावनः श्राद्धार्हः । अत्र 'तदभाव'शब्दः पूर्वसंबन्धनीयो रहस्यविदभावे 'त्रिमध्वादयः' (बौ.,२,१४,२) इत्यर्थः (गोविन्दस्वामी ॥)

(3) गुणहानात् परेषामिति मूलमातृका ।

(4) 'योनिसंबन्धाः' मातुलादयः । 'मन्त्रसंबन्धाः' ऋत्विजो याज्याश्च । 'अन्तेवासिसंबन्धः' शिष्या आचार्याश्च (उज्ज्वला ॥)

(5) चशब्दाद्याज्यांश्च । द्वितीयचकारात् समानार्षेयांश्च । एकेग्रहणात् भोजनीया एवेति गौतमः । तत्र यदि गुणवन्तस्तदा भोजयेत् । यदि गुणहीनास्तदा न भोजनीया इति द्रष्टव्यम् । (मस्करी)

(6) अपिशब्दात् समानगोत्राणामपि ग्रहणमिति (मस्करी) । एकवचनप्रयोगात् एकमपि भोजयेत् । यथाह वसिष्ठः [११,२९:]

अपि वा भोजयेदेकं ब्राह्मणं वेदपारगम् ।
श्रुतवृत्तशीलसंपन्नमवलक्षणवर्जितम् ॥ (मस्करी)

महाभारते [अनु, ६१,२४-२५,३०-३१]

चीर्णव्रता गुणैर्युक्ता भवेयुर्येऽपि कर्षकाः ।
सावित्रीज्ञाः क्रियावन्तस्ते राजन् केतनक्षमाः ॥
क्षात्रधर्मिणमप्याजौ केतयेत्कुलजं द्विजम् ।
न त्वेवं वणिजं तात श्राद्धेषु परिकल्पयेत् ॥
अव्रती कितवः स्तेनः प्राणिविक्रयिकोऽपि वा[1] ।
[2]पश्चाच्चेत्पीतवान् सोमं सोऽपि केतनमर्हति ॥
अर्जयित्वा धनं पूर्णं दारुणैः कृषिकर्मभिः[3] ।
भवेत् सर्वातिथिः पश्चात् स राजन् केतनक्षमः ॥

(1) 'प्राणिविक्रयिको वणिक्' इति मु. म. भा.
(2) 'सनिष्कृतिः पुनः सोमं पीतवान् केतनक्षमः' इति मु. म. भा.
(3) 'दारुणैरपि कर्मभिः' इति मु. म. भा.

॥ ९ ॥

## ॥ अथ वर्ज्याः ॥

तत्र मनुः [३,१३८-१४१]

न श्राद्धे भोजयेन्मित्रं धनैः कार्योऽस्य संग्रहः ।
नारिं न मित्रं यं विद्यात्तं श्राद्धे भोजयेद् द्विजम् ॥
यस्य मित्रप्रधानानि श्राद्धानि च हवींषि च ॥
तस्य प्रेत्य फलं नास्ति श्राद्धेषु च हविःषु च ॥
यः सङ्गतानि कुरुते मोहाच्छ्राद्धेन मानवः ।
स स्वर्गाच्च्यवते लोकाच्छ्राद्धमित्रो द्विजाधमः ॥
संभोजनी साऽभिहिता पैशाची दक्षिणा द्विजैः ।
इहैवास्ते तु सा लोके गौरन्धेवैकवेश्मनि ॥
'संभोजनी' सहभुज्यते यया ।

तथा [३,१४४]

कामं श्राद्धेऽर्चयेन्मित्रं नाभिरूपमपि त्वरिम् ।
द्विषता हि हविर्भुक्तं भवति प्रेत्य निष्फलम् ॥

मनुर्यमश्च प्रथमे [मनु, ३,१६८,१४२]

ब्राह्मणो ह्यनधीयानस्तृणाग्निरिव शाम्यति ।
तस्मै हव्यं न दातव्यं न हि भस्मनि हूयते ॥
[1]यथेरिणे बीजमुप्तं न वप्ता लभते फलम् ।
तथाऽनृचे हविर्दत्वा न दाता लभते फलम् ॥

(1) 'ईरिणं' ऊषरदेशः ।

वसिष्ठः [३,१२]

विद्वद्भोज्यान्यविद्वांसो येषु [1]श्राद्धानि भुञ्जते ।
तान्यनावृष्टिमृच्छन्ति[2] महद्वा जायते भयम् ॥

मनुयमशातातपाः[3]

यावतो ग्रसते पिण्डान् हव्यकव्येष्वमन्त्रवित् ।
तावतो ग्रसते प्रेत्य दीप्तान् शूलष्टर्ययोगुडान् ॥

हारीतः

अपि विद्याकुलैर्युक्ता हीनवृत्ता नराधमाः ।
दुष्प्रापणात्तु देहस्य दुरात्मानो हि ते स्मृताः ॥
क्षौद्रेषु निरता नित्यं यातुधानाः प्रकीर्तिताः ।
यदेवं बहुभिः पापैः सदा यन्ति नराधमाः ॥
पक्षिमीनमृगघ्ना ये सर्पकच्छपघातिनः ।
नानाजन्तुवधे सक्ताः प्रोक्ता दुर्ब्राह्मणा हि ते ॥

तथा

शूद्रप्रेष्यो भृतो राज्ञा वृषलो ग्रामयाजकः ।
वधबन्धोपजीवी च षडेते ब्रह्मबान्धवाः ॥

'क्षौद्रं', क्षुद्रकर्म, प्राणिवधादि । 'देहस्य' मनुष्यशरीरस्य । 'ब्रह्मबान्धवाः' द्विजाधमाः ॥

यमः

यस्य वेदश्च वेदी च विच्छिद्येते त्रिपौरुषम् ।
स वै दुर्ब्राह्मणो नाम यश्चैव वृषलीपतिः ॥

(1) 'येषु राष्ट्रेषु भुञ्जते' इति मुद्रितवासिष्ठे ।

(2) हेमाद्रिः—'ऋच्छन्ति' प्राप्नुवन्ति (४६०)

(3) मनुः, ३, १३३ । हेमाद्रिः, ४६१—'पिण्डान्' ग्रासान् । 'अमन्त्रवित्' वेदरहितः । 'दीप्तान्' अग्निसन्तप्तान् । 'ऋष्टिः' आयुधविशेषः । 'अयोगुडाः' अयोगोलकाः ॥

उशना

यथार्थहेतोः पतितानादिष्टान् मनुरब्रवीत् ॥
वेदविक्रयिणो ह्येते नैव श्राद्धेषु भोजयेत् ॥
'यथार्थमादिष्टान्' अध्यापनमित्यर्थः ॥

तथा

असमानयाजकाश्च श्रुतिविक्रयकाश्च ये ॥
अन्यपूर्वप्रजाताश्च पतितान् मनुरब्रवीत् ॥
असंस्कृताऽध्यापकाश्च भृतकाध्यापकाश्च ये ॥
तमो विशन्ति ते घोरमिति वैवस्वतोऽब्रवीत् ॥
'असंस्कृतोऽ'त्रानुपनीतः ।

'आमन्त्रयेद्' इत्यनुवृत्तौ—

कात्यायनः[1]

द्विर्नग्नशुक्ल[1]विक्लिधश्यावदन्तविद्धप्रजननव्याधित-व्यङ्गश्वित्रिकुष्ठिकुनखिवर्जम् ॥

'द्विर्नग्नो' विधर्मा। 'शुक्लः' अतिगौरः। 'विक्लिधः' विचर्चिकादियुतः। 'विद्धप्रजननः' कृतशिश्नविकारविशेषो दाक्षिणात्ये प्रसिद्धः ॥

गौतमः [१५,१८-१९]

न भोजयेत् स्तेनक्लीबपतितनास्तिकतद्वृत्ति[2]वीरहाग्रे-दिधिषूदिधिषूपतिस्त्रीग्रामयाजकाजपालोत्सृष्टाग्निमद्यपकु-

(1) हेमाद्रिः, ४६९—विक्लव for विक्लिधः।

(2) 'वीरहा' पुरुषमात्रघातकः, 'अवीरा याश्च योषितः' इत्यादौ पुरुषे वीरशब्दप्रयोगात् (मस्करी).

ज्येष्ठायां यद्यनूढायां कन्या या तूह्यतेऽनुजा ।
सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूस्स्मृता ॥
इति मनु (?) स्मरणात्। अथवा [मनुः ३, १७३]
भ्रातुर्मृतस्य भार्यायां योऽनुरज्येत कामतः ।
धर्मेणापि नियुक्तायां स ज्ञेयो दिधिषूपतिः ॥

चरकूटसाक्षिप्रातिहारिकान्[1]। उपपतिर्यस्य च सः। कुण्डाशिसोमविक्रय्यगारदाहिगरदावकीर्णिगणप्रेष्यागम्यागामिहिंस्रपरिवित्ति[2]परिवेत्तृपर्याहितपर्याधातृत्यक्तात्मदुर्बलकुनखि[3]श्यावदन्तपौनर्भवकितवाजपराजप्रेष्यप्रातिरूपिकशूद्रापतिनिराकृतिकिलासिकुसीदवणिक्शिल्पोपजीविज्यावादित्रतालनृत्यगीतशीलान्। पित्रा चाऽकामेन विभक्तान्। शिष्यांश्चैके सगोत्रांश्च॥

'तद्वृत्तिः' पतितार्थोपजीवी। 'स्त्रीग्रामयाजकः' स्त्रीणां बहूनां चाविशेषेण याजकः। 'मद्यपः' सुराव्यतिरिक्तमद्यपाता, सुरापस्य पतितपदेनोक्तत्वात्। 'कुचरः' कुत्सिताचारः। 'प्रातिहारिकः' प्रतिहार इन्द्रजालम्, तेन जीवति प्रातिहारिकः। 'यस्य च स' इति, 'उपपतिर्यस्य विद्यते' यस्य व्यभिचारिणी भार्येत्यर्थः। 'आत्मत्यागी' साहसिकः। 'दुर्बलो'ऽत्र नपुंसकः। 'अजपः' जपरहितः।[4]'प्रातिरूपिकः' कूटपण्यस्य विक्रेता। 'किलासी'[4] सिध्मलः। 'ज्याशीलः' आयुधाभ्यासरतः॥

याज्ञवल्क्यः [१,२२२-२२४]

> रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा।
> अवकीर्णी कुण्डगोलौ[5] कुनखः श्यावदन्तकः॥

(1) 'प्रातिहारिकः' ऐन्द्रजालिकः (अपरार्कः, ४५३)॥

(2) दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः॥ (मनुः. ३, १७१)

(3) 'श्यावच्छ्विन्त्रि' इति मस्करिपाठः।

(4) 'प्रातिरूपकः' कूटतुलामानादिव्यावहारिकः, येनकेनचित् प्रकारेण वञ्चितो वा। (मस्करी)

(5) 'किलासी' कुष्ठी भूमिहर्ता वा (मस्करी)

(6) परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ।
पत्यौ जीवति कुण्डस्स्यान्मृते भर्तरि गोलकः॥ इति मनुः(६, १७४)

भृतकाध्यापकः क्लीबः कन्यादूष्यभिशस्तकः ।
मित्रध्रुक् पिशुनः सोमविक्रयी परनिन्दकः ॥
मातापित्रोर्गुरोस्त्यागी कुण्डाशी[1] वृषलात्मजः ।
परपूर्वापतिस्तेनकर्मदुष्टाश्च निन्दिताः ॥

[2]यमः

नाश्नन्ति पिशुने देवा नाश्नन्त्यनृतवादिनि ।
भार्याजितस्य नाश्नन्ति यस्य चोपपतिर्गृहे ॥
न स्वैरैरुपजातस्य न रक्तोऽन्तरवाससः ।
द्व्यङ्गुलातीतकर्णस्य भुञ्जते पितरो हविः ॥
य एतैर्लक्षणैर्युक्तास्तांस्त्वपङ्क्त्यान् विनिर्दिशेत् ॥
ये त्वेतैरशुभैर्दोषैर्निवृत्तास्तान्नियोजयेत् ॥

[3]देवलः

गोभर्तृविश्वस्तान्नदप्रव्रजितमित्रघातकाः । मातृपितृपुत्रदाराग्निहोत्रत्यागिनो यज्ञोपनिहन्ता वृषलीपतिः सोमविक्रयी व्रात्यो निष्क्रियश्चेति पतिताः । जारोपपतिकुण्डाशिकुण्डगोलकभर्तृदिधिषूपतिमूढभृतकाध्यापकायाज्ययाजकब्रह्मधर्मदुष्टद्रव्यविक्रयिकदर्यवर्णसंभेदकानार्यभ्रष्टशौचाधन्यदेवलकवार्धुषिकगोत्रभित्परिवित्तिपरिवेत्तृकृष्णपृष्ठकाण्डपृष्ठाधिकृतनिराकृत्यवकीर्णिम्लेच्छावरेटकरणारण्यागारदाहिनः षड्विधाः क्लीबाश्चेत्युपपातकिनः[4] । अनपत्यकूटसाक्षिपुंस्त्वोपघाति[5]स्त्रीजितसेतुभेदकतालाव-

(1) कुण्डस्यान्नं योऽश्नाति असौ 'कुण्डाशी' । एवं गोलकस्यापि । (मिताक्षरा)

(2) अपरार्के, ४४७–४४८.

(3) हेमाद्रिः, ४९६.

(4) अपरार्कः, ४४९.

(5) 'कूटोपसाक्षिपृष्ठोपघातिस्त्रीजित' इति हेमाद्रिपाठः (४९६) ।

चरण[1]रङ्गोपजीविविधर्मपाठक[2]प्रायश्चित्तनिमित्तधूर्तसाह-सिकमृगयुकितवनास्तिकपिशुन[3]शठवणिग्वन्दि[4]पौनर्भवा-त्मंभरिशुक्तिसमुद्रयायिकृत्याभिचारशील[5]मेलकश्वयुग्वै-द्यभृतककन्यादूषक[6]कृतघ्नक्रूरकुहकमित्रध्रुग्दत्तापव्ययिसम-यभेदक[7]वाग्दण्डपरुषकारुकशिल्पकहस्त्यारोहाश्वबन्धका-श्चेति वर्ज्याः पातनीयकाः । अष्टाभिः पापरोगैरभिभूता विकलेन्द्रिया हीनाङ्गाधिकाङ्गाश्चेति पङ्क्तिदूषकाः । उन्मा-दस्त्वग्दोषो राजयक्ष्मा श्वासो मधु प्रमेहो भगन्दरो महोदर-मश्मरीत्यष्टौ पापरोगाः । जडान्धकाणबधिरकुणि इति विकलेन्द्रियाः । उभयभेदसंक्लेदा दुष्टव्रणाः । पापिष्ठ-तमाश्चेति ।

एते पञ्चविधाः प्रोक्ता वर्जनीया नराधमाः ।
स्वसंज्ञालक्षणास्ते स्युः विशेषश्चात्र वक्ष्यते ॥
एते दुर्ब्राह्मणाः सर्वे क्रमशः समुदाहृताः ।
कर्मणा योनितश्चैव देहदोषैश्च कुत्सिताः ॥
एतेषां कर्मदोषेण पतिता ये नराधमाः ।
यान्ति ते निरयान् घोरान् त्यक्ताः सद्भिरिहैव च ॥
योनिदोषेण ये दुष्टा ये च दोषैः शरीरजैः ।
इहैव वर्जनं तेषां भवेदनपराधिनाम् ॥
कृतघ्नः पिशुनः क्रूरो नास्तिकः कुहकः शठः ।
मित्रध्रुक् चेति सर्वेषां विशेषान्निरयालयाः ॥

(1) 'खड्गोपजीवि' इति हेमाद्रिः ।
(2) 'पाठकानित्ययाचकप्रायश्चित्तवृत्तिधूर्तसाधनिकमृगयु' इति हेमाद्रिः ।
(3) 'शवरवणिक्' इति हेमाद्रिः ।
(4) 'पौनभर्वात्मंभरि-शुल्कि समुद्रयायि' इति हेमाद्रिः ।
(5) 'तैलिक-शास्त्रिक-' इति हेमाद्रिः ।
(6) 'भ्रूणघ्न' इति हेमाद्रिः ।
(7) 'वाग्दण्डपरुषाशक्त्यशिल्पिक' इति हेमाद्रिपाठः; वाग्दुष्टपरुष—उ.

सर्वे पुनरभोज्याः स्युरदानार्हाश्च कर्मसु ।
ब्रह्मभावान्निरस्ताश्च पापदोषवशानुगाः ॥

'तालावचरणः' तालवादनजीवी । 'विधर्मपाठकः' [श्रुतिस्मृत्यविहितानां धर्माणामध्येता] पुष्कसः । 'मेलकः' मृगवधजीवी ॥ 'श्वयुक्' श्वक्रीडी । 'दत्तापव्ययी' दत्तस्यासद्व्ययकर्ता । 'वाग्दण्डपरुषः' वाग्दण्डाभ्यामुग्रः । 'अश्वबन्धः' विक्रयार्थं योऽश्वान् बध्नाति । 'कुणिः' पाणिविकलः । अन्ये च 'राज्ञः पुरोहितप्रभृतयः' स्मृतिकारैरेव निरुक्ता अग्रे प्रसृद्ध्यन्त इति वक्ष्यामः[1] ॥

इति वर्ज्याः ॥

(1) 'यज्ञापहन्ता' यज्ञविघ्नकारी । नित्यनैमित्तकयोरकर्ता 'निष्क्रियः' । 'गोलस्य' वैधवेयस्य, 'भर्ता' पुत्रत्वेन स्वीकर्ता, 'गोलभर्ता' । ब्रह्मैव धर्मो यस्य 'ब्रह्मधर्मा' ब्रह्मवित्त्वव्याजेन सकलधर्मत्यागीत्यर्थः । 'अनार्यः' अशिष्टः । 'निकृतः' छद्मप्रयोगपरः । 'पृष्ठोपघाती' परोक्षे घातोपायप्रयोक्ता, चमरीपुच्छछेत्ता वा बलीवर्दपुच्छोत्पाटनेन वाणिज्यादिकर्ता वा । 'तालावचरणः' तालवादकः, चरतेर्भक्षणार्थत्वात्तालफलस्य तालनिर्यासस्य भक्षयिता वा । श्रुतिस्मृत्यविहितानां धर्माणां अध्येताऽ'धर्मपाठकः' । प्रायश्चित्तप्रत्याम्नायभूतेन वा परप्रायश्चित्ताचरणलब्धेन वा द्रव्येण वृत्तिर्जीवनं यस्य सः 'प्रायश्चित्तवृत्तिः' । 'धूर्तः' वञ्चकः । तुरगादिसाधनेष्वधिकृतः 'साधनिकः' । 'मृगयुः' पापर्द्धिव्यसनी । देवपित्रादिभ्योऽप्रदाय निजोदरभरणमात्रपरायणः 'आत्मम्भरिः' । 'भ्रूणघ्नः' गर्भपाती । 'कुहकः' दाम्भिकः । 'दत्तापव्ययी' परैर्दत्तस्य धनस्यासद्व्ययकर्ता ॥(हेमाद्रिः,४९७-४९८)

## ॥ १० ॥

## ॥ अथापाङ्क्तेयाः[1] ॥

तत्र यमः

अपाङ्क्तेया[2] द्विजाश्चान्ये तान् मे निगदतः शृणु ।
येभ्यो दत्तं न देवानां न पितॄणां च कर्मकृत् ॥
काणाः कुण्डाश्च[3] पण्डाश्च[4] कृतघ्ना गुरुतल्पगाः ।
ब्रह्मघ्नाश्च सुरापाश्च स्तेना गोघ्नाश्चिकित्सकाः ॥
[5]राष्ट्रकामास्तथोन्मत्ताः[6] पशुविक्रयिणश्च ये ।
[7]मानकूटास्तुलाकूटाः शिल्पिनो [8]ग्रामयाजकाः ॥
वृषलीभिः प्रपीताश्च श्रेणीराजन्ययाजकाः ।
राजभृत्यान्धबधिरमूकखल्वाटपङ्गवः ॥
[9]कलोपजीविनश्चैव ब्रह्मविक्रयिणस्तथा ।

(1) हेमाद्रिः, ४८८-४९०.

(2) ‘ अश्राद्धेयाः ’ इति मित्रमिश्राद्दतपाठः

(3) ‘कुब्जाश्च ’ इति हेमाद्रि-मित्रमिश्राद्दतपाठः (श्राद्धप्रकाशः, ९३)

(4) ‘ षण्डाश्च ’ इति हेमाद्रिमित्रमिश्रौ ।

(5) पौरोहित्यार्थं यज्ञार्थं वा राष्ट्रं वशीकर्तुं कामयते सः ‘ राष्ट्रकामः’ ॥ ( हेमाद्रिः, ४९० ) । ‘ परराष्ट्रं ’ इति मित्रमिश्रः (९४)

(6) ‘ तापसोन्मत्ताः’ इति मित्रमिश्रः ।

(7) ‘ ग्रामकूटाः’ इति हेमाद्रिः, ४८८ ; मित्रमिश्रः, ९३; ‘ मानकूटा ’ इति कमलाकरः । ग्रामं कूटयति छलयतीति ‘ ग्रामकूटकः’ (हेमाद्रिः, ४९०)

(8) ‘ ग्रामयाचकाः ’ इति हेमाद्रिः । ‘ग्रामयाजकाः’ इति मित्रमिश्रः ।

(9) ‘ कलया ’ सुवर्णवृद्ध्या जीवतीति ‘ कलोपजीवी ’ (हे., ४९०) ‘ कल्पोजीविनः’ इति मित्रमिश्रः । ‘कन्योपजीविन’ इति युक्तमिति श्राद्धप्रकाशे सूचितम् ।

[1]दण्डध्वजाश्च ये विप्रा ग्रामकृत्यकराश्च ये ॥
अगारदाहिनश्चैव गरदा वनदाहकाः[2] ।
कुण्डाशिनो देवलकाः परदाराभिमर्षकाः ॥
श्यावदन्ताः कुनखिनः कुष्ठिनः शिल्पिनश्च ये ।
वणिजो मधुहन्तारो[3] हस्त्यश्वदमका द्विजाः ॥
कन्यानां दूषकाश्चैव ब्राह्मणानां च दूषकाः ।
[4]सूचकाः पोषकाश्चैव कितवाश्च कुशीलवाः ॥
[5]समयानां च भेत्तारः प्रदाने ये च बाधकाः ।
अजाविका माहिषिकाः सर्वविक्रयिणश्च ये ॥
[6]वैष्णवीषु च ये सक्ता अलाजादाहिनस्तथा[7] ।
धनुष्कर्ता वृतवृत्तिर्मित्रध्रुक् शठ एव च ॥
इषुकर्ता तथा वर्ज्यो यश्चाग्रेदिधिषूपतिः ।
पाण्डुरोगी गण्डमाली यक्ष्मी च भ्रामरी तथा ॥
पिशुनः कूटसाक्षी च दीर्घरोगी वृथाश्रमी[8] ।
प्रव्रज्योपनिवृत्तश्च वृथाप्रव्रजितश्च यः ॥

(1) यो महापराधी राज्ञा च पदाद्यङ्कनेन कृतदण्डः स 'दण्डध्वजः' उच्यते ( हेमाद्रिः)

(2) 'गरदानलदाहकाः' इति मित्रमिश्रः

(3) 'मधुहन्तारो' इति हेमाद्रिमित्रमिश्रौ—मधुग्रहणार्थं मधुमक्षिकोपघाती 'मधुहन्ता' इति व्याकुरुतः । 'मधुहर्तार' इति—उ

(4) 'सूचकाः' परदोषस्य इति शेषः (श्रा. प्र., ९४)

(5) राजादिकृता व्यवस्थाः 'समयाः' ( हे.)

(6) 'वैष्णवीषु' इन्द्रजालादिमायासु ( हे.)

(7) 'शलाकादाहिनश्च ये' इति हेमाद्रिवीरमित्रोदयपाठः । 'शलाकादाहिनः' ब्रह्मचिकित्सायां लोहशलाकया दाहकाः । कल्पतरौ तु 'अलाजादाहिन' इति पाठः । तदा लाजादाहो लाजहोमस्तदुपलक्षितो विवाहो यैर्न कृत इत्यर्थः ॥ (श्राद्धप्रकाशे, ९४) ॥ 'शलाका' शस्त्रं, 'दाहः' अग्निकर्म, ताभ्यां ये भैषज्यमाचरन्ति ते 'शलाकादाहिनः' इति हेमाद्रिः (४९१) ॥

(8) यः शास्त्राविहिताश्रमेषु वर्तते स 'वृथाश्रमी' ( हे.)

यश्च प्रव्रजिताज्जातः [1]प्रव्रज्यावसितश्च यः ।
तावुभौ ब्रह्मचाण्डालावाह वैवस्वतो यमः ॥
राज्ञः प्रेष्यकरो यश्च ग्रामस्य नगरस्य च ।
समुद्रयायी वान्ताशी[2] केशविक्रयिणश्च ये[3] ॥
अवकीर्णी [4]शरीरघ्नो गुरुघ्नः पितृदूषकः ।
गोविक्रयी च दुर्वालः पूगानां चैव याजकः ॥
मद्यपश्च कदर्यश्च सह पित्रा विवादकः ।
[5]दाण्डिको बन्धकीभर्ता[6] त्यक्तात्मा[7] दारदूषकः[8] ॥
सद्भिश्च निन्दिताचारः स्वकर्मपरिवर्जितः ।
परिवित्तिः परिवेत्ता भृत्याचार्यो निराकृतिः ॥
शूद्राचार्यः सुताचार्यः शूद्रशिष्यश्च नास्तिकः ।
दुष्टश्च [9]दारकाचार्यो मानकृत्तैलिकस्तथा ॥
चौरा वार्धुषिका दुष्टाः परस्वानां च नाशकाः ।
चतुराश्रमबाह्याश्च सर्वे ते पङ्क्तिदूषकाः ॥
इत्येतैर्लक्षणैर्युक्तांस्तान् द्विजान्न नियोजयेत् ।

'पण्डो'ऽत्र षण्डः । 'चिकित्सकः' चिकित्साजीवी । 'राष्ट्रकामाः' राष्ट्राधिपत्यकामाः । 'मानकूटाः' कूटमानव्यवहा-

(1) विधिवत्प्रव्रज्यां स्वीकृत्य ततः परिभ्रष्टः 'प्रव्रज्यावसितः (हे.)
(2) 'वार्ताशी' इति हेमाद्रिः (४८९)
(3) 'केशविक्रयिणः' चामरादिविक्रेतारः
(4) 'च वीरघ्नो' इति हेमाद्रिमित्रमिश्रौ । बालहन्ता इति च व्याख्यातम् ।
(5) अपराधप्रयोज्यदण्डाधिकृतः 'दाण्डिकः' (हे.)
(6) पुंश्चलीपतिः (हे.)
(7) कृतात्मघातोद्यमः (हे.)
(8) मुखसुखादिना पुरुषान्तरसंयोजनेन वा कुलस्त्रीणां दूषयिता 'दारदूषकः' । वनितान्तरानुरक्ततया पूर्वदाराणां मिथ्याभियोक्ता वा 'दारदूषकः' (हेमाद्रिः)
(9) शिशूनामक्षरपाठको 'दारकाचार्यः' । (हेमाद्रिः)

रिणः। 'श्रेणी' सजातीयसमूहः। 'खल्वाटः' खलतिः। 'दण्डध्वजः' साहसदण्डादिषु राज्ञा कृतदण्डचिह्नः। 'पोषकाः' पक्षिणामिति शेषः। 'वैष्णवी' शूद्रा। 'अलाजादाहिनः' लाजानां दाहो विवाहस्तद्रहिताः, ते च कृतसमावर्तना बोद्धव्याः। 'शठो' मायावी। 'भ्रामरी' अपस्मारी। 'दुर्वालो'ऽत्र लोहितकेशः, खल्वाटगण्डयोः पृथगुपादानात्। 'पूगः' सङ्घः। 'दारकाः' अनुपनीताः। 'तैलिकः' तैलविक्रयोपजीवी॥

मनुः [३, १५०-१६७]

ये स्तेनाः पतिता क्लीबा ये च नास्तिकवृत्तयः।
तान् हव्यकव्ययोर्विप्राननर्हान् मनुरब्रवीत्॥
जटिलं चानधीयानं [1]दुर्वालं कितवं तथा।
याजयन्ति च ये पूगांस्तांश्च श्राद्धे न भोजयेत्॥
चिकित्सकान् देवलकान्[2] मांसविक्रयिणस्तथा।
[3]विपणेन च जीवन्तो वर्ज्याः स्युर्हव्यकव्ययोः॥
प्रेष्यो ग्रामस्य राज्ञश्च कुनखी श्यावदन्तकः[4]।
प्रतिरोद्धा गुरोश्चैव त्यक्ताग्निर्वार्धुषिस्तथा॥
यक्ष्मी च पशुपालश्च परिवेत्ता निराकृतिः[5]।
[6]ब्रह्मद्विट् परिवित्तिश्च गणाभ्यन्तर एव च॥

(1) 'दुर्बलः' इत्यन्ये पठन्ति; 'भोक्तुमक्षमः' इति हेमाद्रिः (४८३); 'दुर्वालः' स्खलितलोहितकेशो विकलेन्द्रियो वा। 'कितवो' द्यूतकारः। 'याजयन्ति ये पूगान्' सङ्घान्। यः क्रमशः प्रत्येकमपि बहून्याजयति बहुकृत्व आर्त्विज्यं करोति, सोऽपि न भोज्यः। (मेधातिथिः)

(2) 'देवलकाः' प्रतिमापरिचारकाः। (मेधातिथिः)

(3) 'विपणेन' लवणादिना प्रतिषिद्धपण्येन

(4) 'श्यावदन्तकः' इति मेधातिथिहेमाद्रिमित्रामिश्रपाठः। श्यामदन्तकः-उ.

(5) 'निराकृतिः' सत्यधिकारे महायज्ञानुष्ठानरहितः (मेधातिथिः) विस्मृतवेदो वा (हेमाद्रिः, ४८३)

(6) ब्राह्मणानां वेदस्य वो द्वेष्टा 'ब्रह्मद्विट्' (हेमाद्रिः)

कुशीलवोऽवकीर्णी[1] च वृषलीपतिरेव च ।
पौनर्भवश्च काणश्च यस्य चोपपतिर्गृहे ॥
भृतकाध्यापको यश्च भृतकाध्यापितश्च यः ।
[2]शूद्रशिष्यो गुरुश्चैव वाग्दुष्टः[3] कुण्डगोलकौ ॥
[4]अकारणात् परित्यक्ता मातापित्रोर्गुरोस्तथा ।
[5]ब्राह्मैर्यौनैश्च संबन्धैः संयोगं पतितैर्गतः ॥
अगारदाही गरदः कुण्डाशी सोमविक्रयी ।
समुद्रयायी वन्दी च तैलिकः कूटकारकः[6] ॥
पित्रा विवदमानश्च केकरो मद्यपस्तथा ।
पापरोग्यभिशस्तश्च दाम्भिको रसविक्रयी[7] ॥
धनुःशराणां कर्ता च यश्चाग्रेदिधिषूपतिः[8] ॥

(1) 'अवकीर्णी' स्त्रीसंबन्धात् विलुप्तब्रह्मचर्यः ।

(2) शूद्रस्य शिष्यः 'शूद्रशिष्यः', तस्य गुरुः ।

(3) वाचा दुष्टः परुषानृतभाषी । अभिशस्त इत्यन्ये (मेधातिथिः)

(4) परित्यागकारणं च 'त्यजेत् पितरं राजघातकम्' इत्यादि । मातापित्रोः 'परित्यागस्तु' तत्पादसेवादेः शुश्रूषायाः अकरणम् । (मेधातिथिः)

(5) 'ब्राह्मैः' याजनाध्यापनादिभिः, 'यौनैः' कन्यादानादिभिः संबन्धैः, यः पतितैः सह संसर्गं गतः, 'संवत्सरेण पतितेन सहाचरति' इति पातितपदेनैव लब्धेऽपि संसर्गिणि वत्सरादर्वागपि प्रतिषेधार्थमिदम् ॥ (हेमाद्रिः, ४८४)

(6) अगारस्य गृहस्य दग्धा । 'कूटकारकः' साक्ष्येष्वनृतवादी । (मेधातिथिः) ॥ 'कूटानां' नाणकानां कर्ता वा (हेमाद्रिः, ४८४)

(7) 'केकरो' वलितप्रेक्षां अध्यर्धदृष्टिः । 'पापरोगी' कुष्ठी । 'रसविक्रयी' विषस्य विक्रेता । (मेधातिथिः) ॥ मधुरादिरसाधिष्ठानानां गुडलवणक्षौद्रकप्रभृतीनां विक्रेता इति शङ्खधरः (हेमाद्रिः)

(8) 'अग्रेदिधिषूपतिः' इत्यत्र दिधिषूशब्दस्य अग्रेपदेन पतिपदेन च पृथक्-संबन्धः । ततोऽग्रेदिधिषूपतिरेकः दिधिषूपतिरन्यः । समासान्तर्गतस्यापि एकशब्दस्य द्वाभ्या भिन्नप्रस्थानाभ्यामभिसंबन्धः स्मृतिशास्त्रत्वादुपपद्यत इति समाहितं मेधातिथिना । मृतस्य भ्रातुर्भार्यायां धर्मेण नियुक्तायामपि योऽनुरागवशदालिङ्गन-चुम्बनादीनि कुर्यादसकृद् वा प्रवर्तते स 'दिधिषूपतिः' । जीवतस्तावत् भ्रातुर्भार्या-यामनुरक्तः 'अग्रेदिधिषूः' । अथवा विवाहार्हायां ज्येष्ठायामनूढायां या कनीयसी परिणीयते सा 'अग्रेदिधिषूः', तस्याः पतिः 'अग्रेदिधिषूपतिः' ॥ (हेमाद्रिः, ४८५)

मित्रध्रुग्घ्यतवृत्तिश्च पुत्राचार्यस्तथैव च ॥
भ्रामरी गण्डमाली च श्वित्र्यथो पिशुनस्तथा[1] ।
उन्मत्तोऽन्धश्च वर्ज्याः स्युर्वेदनिन्दक एव च ॥
हस्तिगोऽश्वोष्ट्रदमको नक्षत्रैर्यश्च जीवति ।
पक्षिणां पोषको यश्च युद्धाचार्यस्तथैव च ॥
स्रोतसां भेदकश्चैव तेषां चावरणे[2] रतः ।
[3]गृहसंवेशको दूतो वृक्षारोपक एव च ॥
श्वक्रीडी श्येनजीवी च कन्यादूषक एव च ।
हिंस्रो वृषलपुत्रश्च[4] गणानां चैव याजकः ॥
आचारहीनः क्लीबश्च नित्यं याचनकस्तथा ।
कृषिजीवी [5]श्लीपदी च सद्भिर्निन्दित एव च ॥
[6]औरभ्रिको माहिषिकः परपूर्वापतिस्तथा ।
प्रेतनिर्यातकश्चैव वर्जनीयाः प्रयत्नतः ॥
एते विगर्हिताचारा अपाङ्क्तेया नराधमाः[7] ।
द्विजातिप्रवरो विद्वानुभयत्र विवर्जयेत् ॥

'जटिलो' ब्रह्मचारी । अत्र 'अनधीयानः' उपनीतमात्रोऽनादिष्टवेदव्रतः। यत्र 'ब्रह्मचारी' 'सहस्रद' इत्यत्र

(1) 'भ्रामरी' अपस्मारी। 'श्वित्री' श्वेतकुष्ठी। 'पिशुनः' परमर्मप्रकाशकः कर्णेजपः ॥ (मेधातिथिः)

(2) 'वावारणे' इति मूलमातृकायाम् । 'आवरणं' आच्छादनं इति (मेधातिथिः)

(3) 'गृहसंवेशकः' वास्तुविद्योपजीवी । (हेमाद्रिः)

(4) 'वृषलवृत्तिश्च' इति मेधातिथिपाठः—शूद्रेभ्यः सेवादिना यो जीवति इति व्याख्यातश्च ।

(5) 'श्लीपदी' एकः पादो महान् यस्य । (मेधातिथिः)

(6)a 'उरभ्राः' मेषाः पण्यं यस्य सः 'औरभ्रिकः' । एवं 'माहिषिकः'। (हेमाद्रिः)

(7) 'एतान् विगर्हिताचारान् अपाङ्क्तेयान्नराधमान्' इति मेधातिथिः पठति ।

पङ्क्तिपावनत्वमुक्तं, तदध्ययनयुक्तस्य बोद्धव्यम्। 'दुर्वालः' खलतिः, न तु दुश्चर्मा, तस्य पदेनैव पृथगुपादानात् ॥ 'प्रतिरोद्धा' गुरोरासेधकर्ता[1] । 'गणाभ्यन्तरः' गणस्य सामान्यपुरुषः। 'वृक्षारोपकगृहसंवेशकदूता' अत्र भृतिजीविनो बोद्धव्याः[2] ॥

**शङ्खः**

ब्राह्मणा ये विकर्मस्था[3] बैडालवृत्तिकास्तथा[4] ।
हीनाङ्गा चाधिकाङ्गाश्च विज्ञेया पङ्क्तिदूषकाः ॥
कुनखी श्यावदन्तश्च दुश्चर्मा वृषलीपतिः ।
कुष्ठी च राजयक्ष्मी च ब्राह्मणाः पङ्क्तिदूषकाः ।
गुरूणां प्रतिकूलाश्च वेदाग्न्युत्सादिनश्च ये ।
गुरूणां त्यागिनश्चैव ब्राह्मणाः पङ्क्तिदूषकाः ॥
अनध्यायेष्वधीयानाः शौचाचारविवर्जिताः ।
शूद्रान्नरसपुष्टाङ्गा ब्राह्मणाः पङ्क्तिदूषकाः ॥

**शङ्खलिखितौ**

[5]अनृतवादी तस्करो राजभृत्यो वृक्षारोपकवृत्तिर्गरदोऽग्निदः[6] शूद्रोपाध्यायो वन्दी घाण्टिको देवलको पुरोहितो

(1) 'प्रतिरोद्धा' गुरोर्वाग्व्यवहारेऽन्यत्र च यो गुरोः प्रतिबन्धे प्रातिकूल्ये च वर्तते । (मेधातिथिः)

(2) वृक्षान् रोपयति मूल्येन । धर्मार्थं तु न दोषः । 'दूतो' राज्ञः प्रेष्यो दासवद्विनियोज्यः । दूतस्तु सन्धिविग्रहादावेव प्रेष्यते । 'गृहसन्निवेशकः' वास्तुविद्याजीवी । न त्वात्मनो गृहाणां सन्निवेशयिता ॥ (मेधातिथिः)

(3) अविहितप्रतिषिद्धकर्मानुष्ठातारो 'विकर्मस्थाः' (हेमाद्रिः)

(4) 'वृतिकाः शठाः' इति हेमाद्रिः (४९३)

(5) 'अनृक्', (अनधीतवेदः) इति हेमाद्रिपाठः (४९२)

(6) 'अग्निदः श्वागणिकः शूद्रोपाध्यायो' इति हेमाद्रिणा धृतः पाठः । श्वगणैः चरतीति 'श्वागणिकः' ।

नक्षत्रादेशवृत्तिर्ब्रह्मपुरुषो[1] मद्यपो ब्रह्मविक्रयी कितवः कूटकारको मानुषपशुविक्रयिणश्चेत्यपाङ्क्तेयाः ॥

[2]हारीतः

चिकित्सकवृषलप्रेष्यकारुककितवश्वक्रीडकशकुनिजीवन[3]मीनघातकचेष्टितपुंश्चलवार्धुषिकाहितुण्डिकप्रत्यवसित-भृतकाध्यापकतैलिकसूचकनियामककुशीलवादीन् दैवे पित्र्ये च वर्जयेत् । नास्तिकक्लीबकदर्यपौरन्ध्रिकाक्रीडिनोऽनृतवादिनो जपहोमसन्ध्याशौचवर्जिताः यौनस्रौवमौखसंकरसंकीर्णाश्चापुण्या ब्राह्मणवृत्तिप्लववधबन्धोपजीविवृषलीपतिशूद्रग्रामयाजकतस्करागारदाहिगरदसोमविक्रयिगायननर्तकधनुःशरयोजकाः [5]कुण्डगोलकौ नराशंसकापिलकदेवल[6]घाण्टिकनक्षत्रजीविमहोदधिगामिदीर्घरोगिमहापथिकाः पतिताः पतितपुरोहिताश्चानिवर्तमानाः पङ्क्तिदूषका भवन्ति ॥

'वृषलप्रेष्यः' शूद्राज्ञाकारी । 'शकुनिजीवनः' श्येनजीवी । 'मीनघातकचेष्टितः' 'मीनघातको' बकः, तस्येव चेष्टितं वृत्तिर्यस्य स तथा, बकवृत्तिरित्यर्थः । 'आहितुण्डिकः' सर्पक्रीडाजीवी । 'नियामकः' पोतवाहकः, भृतिमादाय यः परान्नियच्छति वा । 'कुशीलवः' चारणः । 'आक्रीडी' सततं

(1) 'यो जीवन्मुक्तवेषेण लोकं प्रतारयन् द्रव्यमर्जयति स 'ब्रह्मपुरुषः ।' (हेमाद्रिः)

(2) हेमाद्रिः, ४९४.

(3) 'मीनघातकावेष्टिक' इति हेमाद्रिः ।

(4) 'कदर्य-क्रीडन' इति हेमाद्रिः ।

(5) 'अण्डगोल्रौ नराशंस-प्रघाण्टिक-नक्षत्रजीवि-महाब्धिगामि' इति हेमाद्रिणा पठितम् ।

(6) यः क्षुद्रघण्टिकादिनिबन्धनपुरःसरेण नृत्यगीतादिना जीवति स 'घाण्टिकः' । यो वा महतीं घण्टां वादयन्नेव प्रतिगृहं भिक्षते सोऽपि 'घाण्टिकः' । गुर्जरदेशे घण्टाल इति प्रसिद्धः ॥ हेमाद्रिः, ४९४

क्रीडनशीलः। 'अनृतवादी' अनृतभाषणशीलः। 'नराशंसः' मनुष्यस्तुतिशीलः। 'धनुःशरयोजकः' धनुःकर्ता शरकर्ता च। 'कपिलः' कुत्सितकपिलः, अतिकपिलमूर्तिरिति यावत्। 'दीर्घमहापथिकः' दीर्घाध्वना मरणे कृतोद्यमः। 'अनिवर्तमानाः' तत्रैवाभिरताः[1] ॥

[2]विष्णुः [८२,३-३०]

हीनाधिकाङ्गान् विवर्जयेत्। विकर्मस्थांश्च। बैडालव्रतिकान्। वृथालिङ्गिनः। नक्षत्रजीविनः। देवलकान्। चिकित्सकान्। अनूढापुत्रान्। तत्पुत्रांश्च। बहुयाजिनः। ग्रामयाजिनः। शूद्रयाजिनः। [अयाज्ययाजिनः[3]।] व्रात्यान्। [4]अनृतयाजिनः। पर्वकारान्। सूचकान्। [भृतकाध्यापकान्।] भृतकाध्यापितान्। शूद्रान्नपुष्टान्। पतितसंसर्गान्[5]। अनधीयानान्। संध्योपासनभ्रष्टान्। राजसेवकान्। नग्नान्[6]। पित्रा विवदमानान्। पितृमातृगुर्वग्निस्वाध्यायत्यागिनश्चेति ॥

ब्राह्मणापसदा ह्येते कथिताः पङ्क्तिदूषकाः।
एतान् विवर्जयेद्यत्नाच्छ्राद्धकर्मणि पण्डितः ॥

(1) मरणफलकग्रीवावेष्टनं 'आवेष्टः'। आवेष्टनेन पशुसंज्ञपनार्थं यो यज्ञे परिक्रीयते स 'आवेष्टिकः'। संगृहीतपुंश्चलीशुल्केन यो जीवति सः 'पौंश्चलः'। आश्रयात्परिच्युतः 'प्रत्यवसितः'। स्वं धनं स्वस्यायं 'सौवः' स चासौ सङ्करश्च 'सौवसङ्करः' वृत्तिसङ्कर इत्यर्थः। 'महाब्धिगामी' द्वीपान्तरगन्ता। मुमूर्षतया प्रस्थितः 'महापथिकः'। 'अनिवर्तमानाः' प्रायश्चित्तमकुर्वाणाः ॥ (हेमाद्रिः, ४९५)

(2) हेमाद्रिः (४९४)

(3) 'अयाज्ययाजिनः'-Wanting in the printed *Viṣṇusmṛti* and Hemādri's citation.

(4) The printed Smṛti and Hemādri read तद्याजिनः for अनृतयाजिनः (?)

(5) पतितसंसक्तानिति—उ.

(6) 'उग्रान्' इति हेमाद्रिपाठः।

[1]'पर्वकारः' इषुकारः। 'उग्रो'ऽत्र दृष्टान्तःकरणकोपः।

आपस्तम्बः [२,१७,२१]

श्वित्रिः शिपिविष्टः परतल्पगाम्यायुधीयपुत्रश्शूद्रोत्पन्नो ब्राह्मण्यामित्येते भुञ्जानाः पङ्क्तिदूषणाः [भवन्ति॥]

'श्वित्री' दुश्चर्मा। 'आयुधीयपुत्रः' आयुधजीविनः पुत्रः। 'शूद्रोत्पन्नो ब्राह्मण्यां' असमवर्णदारपरिग्रहे ब्राह्मण्यां पुत्रमनुत्पाद्य शूद्रायामुत्पादितपुत्र इति कपर्दी ॥[2]

सुमन्तुः

तस्करकितवाजपालगणिकाशूद्रप्रेष्या[गम्यागामि]परिवेत्तृपरिवित्तिपर्याहित[पर्याधातृ]पौनर्भवान्धबधिरचारणक्लीबावकीर्णिवार्धुषिकगरदायिककूटसाक्षिनास्तिकवृषलीपत्य[3]हुतादोत्सृष्टाग्निसोमविक्रयि[विक्रेतृपौस्तिक[4]कथक[5]]कुण्डाशि[कुण्डगोलक[6]]यन्त्रकारकाण्डपृष्ठ[7]दुश्चर्मषण्ड[[8]चण्ड]

(1) 'पर्वकाराः' काण्डकाराः (हेमाद्रिः, ४९५)

(2) Cited by *Vīramitrodaya*, p. 97. यो विशुद्धजातीयायामपि ब्राह्मण्यां शूद्रात् शूद्रसमानाद् ब्राह्मणादुत्पन्नः॥ (हेमाद्रि, परिशेषखण्ड, ४९६.)

(3) 'अहुतादः' विना पञ्चयज्ञादिकं भोक्ता इति वी. मि., ९५

(4) 'पौस्तिकः' पुस्तकविक्रेता (वी. मि., ९५)

(5) 'कथकः' विटजनरञ्जनाय बृहत्कथादीनां कथानां वक्ता (हेमाद्रिः, ४८०)

(6) [ ] Omitted by the manuscript, and restored from Hemādri, p. 486.

(7) काण्डपृष्ठाश्चोक्ता हारीतादिभिः—[वी. मि., ९५]

शूद्रापुत्राः स्वयंदत्ता ये चैते क्रीतकाः सुताः।
ते सर्वे मनुना प्रोक्ताः काण्डपृष्ठा न संशयः॥
स्वकुलं पृष्ठतः कृत्वा यो वै परकुलं व्रजेत्।
तेन दुश्चरितेनासौ काण्डपृष्ठो न संशयः॥

(8) 'चण्डः' छिन्नमेहनचर्या इति हेमाद्रिः (४८८)

विद्धशिश्न[1]देवलकण्ठारूढ[षण्डारूढ]पतित[2]प्रायोत्थितकुनखिकिलाशि[3]श्यावदन्तवणिक्शिल्पिवादित्रनृत्यतालो[नृत्यगीतवाद्यो]पजीविमूल्यसांवत्सरिक[4]महापथिकाश्मकुट्टकहीनाङ्गातिरिक्ताङ्गविरागवाससश्चापाङ्क्तेयाः ॥

'प्रेष्य'पदस्य गणादिपदैः प्रत्येकमभिसंबन्धः । 'यन्त्रकारकः' इक्षुतिलयन्त्रकारी । 'प्रायोत्थितः' अनशनव्रतभ्रष्टः । 'मूल्यसांवत्सरिकः' मूल्येन यो नक्षत्रादि कथयति, ज्यौतिषक इत्यर्थः ॥

पैठीनसिः

[5][कुनखिकिलाशिश्यावदन्ताः पित्रा विवदमानश्च यश्च स्त्रीजितः] कुष्ठी क्लीबः कितवो दुर्वालो दुश्चर्मा सुरागर्भो विद्धप्रजननः पतितः पिशुनः सोमविक्रयी यज्ञवेदविक्रयी वाणिजको ग्रामयाजी मिथ्याभिशस्तो वृषल्याममभिजातः परिवित्तिः परिवेत्ता दिधिषूपतिः पुनर्भूपुत्रः गोलकुण्डाजाविकाश्चौरः काण्डपृष्ठः सेवकश्चेत्यपाङ्क्तेयाः । श्राद्धे नैतान् भोजयेत् । न यज्ञकर्मणि ॥

'सुरागर्भः' सुरा गर्भे यस्मिन्, यस्मिन् गर्भस्थे मात्रा सुरा पीता ॥[6]

(1) 'विद्धशिश्नः' शिश्नमूले छिद्रं कृत्वा तत्र सुवर्णघण्टिकाघटितमुक्ताफलादिबन्धनकर्ता इति हेमाद्रिः (४८८)

(2) 'आरुढपतितः' त्रिदण्डादिव्रतमारुह्य तस्मात् परिभ्रष्टः (हेमाद्रिः,४८८)

(3) 'किलाशिः' सिध्मरोगी (हेमाद्रिः, ४८९)

(4) 'महापथिकः' समुद्रपथा चारी नित्याध्वगो वा ; 'अश्मकुट्टकः' प्रासादादिनिर्माणाय पाषाणतक्षकः (हेमाद्रिः)

(5) हेमाद्रिः ४९२

(6) सुरापस्त्रीगर्भसम्भूतः 'सुरागर्भः,' कृतप्रायश्चित्तेन सुरापेण जनितो वा (हेमाद्रिः, ४९३)

उशना[1]

अपाङ्क्तेया भवन्ति । तद्यथा जडबधिरजातान्धश्वित्रिकुष्ठिकुणिश्यावदन्तवार्धुषिकदेवलकवणिक्शठ[2]गणाभ्यन्तरचिकित्सक[3]पौनर्भवकाणशिल्पोपजीविपतितसंप्रयोक्तृ[4]कितवानृतदाम्भिकपरपरिभावित[5]प्रभृतयः ॥

'कुणिः' विकलपाणिः । 'परपरिभावितः' परत्वेन शत्रुत्वेन परिभावितः परीक्षित इत्यर्थः ॥

[6]वायुपुराणे

यस्तिष्ठेद्वायुभक्षस्तु चातुराश्रम्यबाह्यतः ।
अयतिर्मोक्षवादी च उभौ तौ पङ्क्तिदूषकौ ॥
उग्रेण तपसा युक्तश्चित्रवादी बहुश्रुतः ।
अनाश्रमी तपःस्तेये तं विप्रं न निमन्त्रयेत् ॥
[7]औपपत्तिस्तथा [8]शाक्यो नास्तिको वेदनिन्दकः ।
ध्यानिनं ये च निन्दति सर्वे ते पङ्क्तिदूषकाः ॥
वृथामुण्डाश्च जटिलाः सर्वे कार्पटिकास्तथा ।
निर्घृणान् भिन्नवृत्तांश्च सर्वभक्ष्यांश्च वर्जयेत् ॥

(1) हेमाद्रिः, ४७९–४९०.

(2) 'षण्डः' षोढा संज्ञाप्रकारणे कृतलक्षणः । 'गणः' सङ्घः, ये सदैकया क्रियया जीवन्ति तेऽत्र गणशब्दवाच्याः, । तदन्तर्गतः चातुर्विद्योऽपि ब्राह्मणः 'गणाभ्यन्तरः' (हेमाद्रिः, ४८०)

(3) धनार्थं रुजां प्रतिकर्ता 'चिकित्सकः' । धर्मार्थिनस्तु तस्य प्रशस्तत्वादिति मेधातिथिः ॥ (हेमाद्रिः, ४८०)

(4) 'संप्रयोक्ता' द्यूतकारी (हेमाद्रिः)

(5) गुरुतरपातकाभियोगेन परैः परिभवं प्रापितः 'परपरिभावितः' (हेमाद्रिः)

(6) वीरमित्रोदये श्राद्धप्रकाशः, ९७

(7) 'औपपत्तिकः' उपपत्तिस्तर्कः, तन्मात्रव्यवहारी, हेतुक इति यावत् (वी. मि., ९८)

(8) 'शाठो' (शाठ्यधर्माभिरतः) इति वी. मि. पाठः

प्राह वेदान् वेदभृतो वेदान् यश्चोपजीवति ।
उभौ तौ नार्हतः श्राद्धं पुत्रिकापतिरेव च ॥
[1]वृथा दारांश्च यो गच्छेद्याजयेच्च वृथाऽध्वरैः ।
नार्हतस्तावपि श्राद्धं द्विजो यश्चैव नास्तिकः ॥
आत्मार्थं यः पचेदन्नं न देवातिथिकारणात् ।
नार्हत्यसावपि श्राद्धं पतितो ब्रह्मराक्षसः ॥
स्त्रियो [2]रक्ताम्बरा येषां परिवादरताश्च ये ।
अर्थकामरता ये च न ताञ्श्राद्धेषु भोजयेत् ॥
सन्ति वेदविरोधेन केचिद्विज्ञानमानिनः ।
अयज्ञपतयो नाम ते भुञ्जन्ति यथा रजः ॥
मुण्डान् जटिलकाषायाञ्श्राद्धे यत्नेन वर्जयेत् ।
शिखिभ्यो धातुरक्तेभ्यस्त्रिदण्डिभ्यः प्रदापयेत् ॥

'अयतिः' असंयतः। 'औपपत्तिः' उपपत्तिमात्रव्यवहारी, हैतुक इत्यर्थः। 'शाक्यः' अत्र शाक्यधर्माभिरतः। 'वृथामुण्डाः' निषिद्धमुण्डनकर्तारः। 'वृथाजटिलाः' शास्त्राननुमतजटाधारिणः । 'कार्पटिकाः' कर्पटव्यवहारिणः । 'निर्घृणाः' निर्दयाः । 'भिन्नवृत्ताः' त्यक्ताचाराः । 'प्राह वेदान् वेदभृत' इति, यो वेदाध्ययनार्थं भृतस्सन् वेदान् प्राह इत्यर्थः । 'पुत्रिकापतिः' पुत्रिकात्वेन कल्पितायाः पतिः । 'वृथा दारांश्च यो गच्छेत्' स्त्रीरतिः पुत्रार्थिताव्यतिरेकेण। पुनः 'नास्तिक'ग्रहणं निन्दातिशयार्थम्। 'स्त्रियो रक्ताम्बराः' रजस्वलाः । 'अर्थकामरताः' धर्ममोक्षव्यतिरेकेणार्थकामरताः। 'अयज्ञपतयः' इत्यत्र यज्ञशब्दो वर्णाश्रमप्रयुक्तकर्मोपलक्षणार्थः। 'मुण्डाः' अत्र लूनशिखाः । 'जटिलस्य' पुनर्वचनं निन्दातिशयार्थम् ।

(1) 'वृथा दारांश्च यो गच्छेत्' निषिद्धादिवसे (वी. मि., ९८)
(2) 'रक्ताम्बरा' आर्तववती (वी. मि., ९८)

[1]महाभारते [अनु. प., ९१,१८,२०,२१]

[2]अग्रणीर्यः कृतः पूर्वं वर्णावरपरिग्रहः ।
ब्राह्मणः सर्वविद्योऽपि राजन्नार्हति केतनम् ॥
अपरिज्ञातपूर्वाश्च गणपूर्वाश्च[3] भारत ।
पुत्रिकापुत्रपूर्वाश्च श्राद्धे नार्हन्ति केतनम् ॥
[4]ऋणकर्ता च यो राजन् यश्च वार्धुषिको द्विजः ।
प्राणविक्रयवृत्तिश्च[5] राजन्नार्हति केतनम् ॥

'अग्रणीः' इति, यः पूर्वं प्रधानीकृतः शिष्टैः पश्चान्निकृष्टवर्णपरिग्रहसंसर्गं करोति, सः श्राद्धे वर्जनीय इत्यर्थः । 'केतनम्' आमन्त्रणम् । 'अपरिज्ञातपूर्वाः' अज्ञाताः पूर्वे पित्रादयो येषां ते तथा । 'गणपूर्वाः' सङ्घे प्रधानीभूताः । 'पुत्रिकापुत्रपूर्वाः' पुत्रिकापुत्रजाः । 'ऋणकर्ता' अत्र ऋणं गृहीत्वा यो न धनिकाय दातुमिच्छति ॥ 'प्राणविक्रयवृत्तिः' प्राणसंशयापादककर्मजीवी ॥

[6]मत्स्यपुराणे

कृतघ्नान्नास्तिकांस्तद्वन्म्लेच्छदेशनिवासिनः ।
त्रिशङ्कून् बर्बरानान्ध्रान् टङ्क[7]द्रविडकोङ्कणान् ॥
कर्णाटकांस्तथा [8]कीरान् कलिङ्गांश्च विवर्जयेत् ॥

(1) हेमाद्रि, परिशेषखण्ड, ४७८–४७९

(2) 'येन कामात्कृतः पूर्वं वर्णान्तरपरिग्रहः' इति हेमाद्रिः पठति । 'येन ब्राह्मणादिकुमारीः अपरिणीय मुख्यतया वर्णान्तरपरिग्रहः कृतः' । (पृ. ४७८.)

(3) गणेषु सङ्घेषु पूर्वा मुख्याः गणपूर्वाः (पृ. ४७९)

(4) योऽनावश्यकव्ययार्थम् ऋणं कुरुते स ऋणकर्ता ( हे. ४७९)

(5) 'सेवकः' इति हेमाद्रिणा व्याख्यातम् (४७९)

(6) वीरमित्रोदय, ९८

(7) 'चीन' वी. मि. पाठः

(8) 'तथाऽऽभीरान्' इति कमलाकरोद्धृतः पाठः

[1]ब्रह्मपुराणे

भोक्तुं श्राद्धेषु [2]नार्हन्ति दैन्योपहतचेतसः ।
षण्डो मूकश्च कुनखी खल्वाटो दन्तरोगवान् ॥
श्यावदन्तः पूतिनासश्छिन्नाङ्गश्चाधिकाङ्गुलिः ।
गलरोगी गण्डमाली[3] स्फुटिताङ्गश्च सज्वरः ॥
खञ्जतूवरमुण्डाश्च तथान्ये दीर्घरोगिणः ।
वृथाजाता विरक्ताश्च व्याधिभारप्रपीडिताः ॥

'तूवरः' श्मश्रुकालेऽपि श्मश्रुरहितः । 'वृथाजाताः' धर्मपराङ्मुखाः । 'विरक्ताः' अत्र यतिव्यतिरिक्ताः ।

अथ मनुः [३,१७०,१८०-१८२]

अव्रतै[4]र्यद्द्विजैर्भुक्तं परिवेत्त्रादिभिस्तथा ।
अपाङ्क्तेयैर्यदन्यैश्च तद्वै रक्षांसि भोजयेत् ॥
सोमविक्रयिणे विष्ठा भिषजे पूयशोणितम् ।
[5]अप्रतिष्ठं वार्धुषिके नष्टं देवलके भवेत् ॥
यत्तु वाणिजके दत्तं नेह नामुत्र तद्भवेत् ।
भस्मनीव हुतं हव्यं तथा पौनर्भवे द्विजे ॥
इतरेषु त्वपाङ्क्त्येषु यथोद्दिष्टेष्वसाधुषु ।
मेदोऽसृङ्मांसमज्जास्थि वदन्त्यन्नं मनीषिणः ॥

यमः

[6]ये व्यपेता स्वकर्मभ्यः स्तेनास्ते परिकीर्तिताः ।
कव्यं ददाति यस्तेभ्यस्तस्य तत्प्रेत्य नश्यति ॥

(1) वीरमित्रोदये, श्राद्धप्रकाशः, ८१
(2) 'न चार्हन्ति दैवोपहतचतेसः' इति वी. मि. पाठः
(3) 'गडुमान्' इति वी. मि., कुब्ज इति व्याख्यातं तत्र ।
(4) 'अव्रताः' असंयताः शास्त्राचारवर्जिताः (मेधातिथिः)
(5) 'नष्टं देवलके दत्तमप्रतिष्ठं तु वार्धुषौ' इति मेधातिथिप्रभृतयः पठन्ति ।
(6) हेमाद्रिः, ४७१

ज्ञानपूर्वं तु ये तेभ्यः प्रयच्छन्त्यल्पमेधसः ।
पुरीषं भुञ्जते सर्वं शतं वर्षाणि सुव्रत[1] ॥

तथा

[2]मद्यपाय न दातव्यं दैवे पित्र्ये तथा हविः ।
तस्मै नश्यति तद्दत्तं यथा भस्मनि वै हुतम् ॥
दातुश्च छिद्यते हस्तो भोक्तुर्जिह्वाथ भिद्यते ।
ज्वलितान् ग्रसते ग्रासान् श्राद्धं तदनृतं भवेत् ॥

मनुः [३,१७६]

[3]अपाङ्क्त्यो यावतः पाङ्क्त्यान् भुञ्जानाननुपश्यति ।
तावतां न फलं तत्र दाता प्राप्नोति बालिशः ॥

तथा [३,१७८,१७७]

यावतः संस्पृशेदङ्गैर्ब्राह्मणान् शूद्रयाजकः ।
तावतां न भवेद्दातुः फलं दानस्य पौर्तिकम्[4] ॥
[5]वीक्ष्यान्धो नवतेः काणः षष्टेः श्वित्री शतस्य तु ।
पापरोगी सहस्रस्य दातुर्नाशयते फलम् ॥

यमः

षष्टिं काणः शतं षण्डः श्वित्री यदनुपश्यति ।
शतं वै पाण्डुरोगी च सहस्रं पतितस्तथा[6] ॥

(1) 'वर्षाण्यमुव्रते' इति मूलकोशे । 'वर्षाणि सुव्रत' इति हेमाद्रिः ।

(2) हेमाद्रिः, ४७२

(3) 'अपङ्क्त्यो' इति मेधातिथिपाठः । 'स्तेनादयः श्राद्धं कुर्वता ततः प्रदेशादपसारणीयाः' । 'बालिशः' मूर्खः । (मेधा.)

(4) पूर्ते भवं पौर्तिकम् । बहिर्वेदिदानाद्यत्फलं तत्पौर्तिकम् । (मेधातिथिः)

(5) यावान् देशश्चक्षुष्मतो दृष्टिगोचरः तावतो देशादनावृतादन्धो विवासनीयः । (मेधातिथिः)

(6) हेमाद्रिः, ४९९–'दूषयतीति शेषः । संख्याभेदो दोषतारतम्येन प्रायश्चित्तभेदार्थः' ।

वसिष्ठः [११,२०]

अत्र चेन्मन्त्रसंयुक्तः[1] शारीरैः पङ्क्तिदूषकैः ।
अदूष्यं तं यमः प्राह पङ्क्तिपावन एव सः ॥

'शारीरैः' शरीरप्रभवैः काणत्वादिभिर्न तु स्वयमुत्पाद्यैरपि स्तेनत्वादिभिः ॥

अथ देवलः

परदाराभिगो मोहात् पुरुषो जार उच्यते ।
स एवोपपतिर्ज्ञेयो यः सदा संविशेद्‌गृहे ॥
जीवतो जारजः कुण्डो मृते भर्तरि गोलकः ।
यस्तयोरन्नमश्नाति स कुण्डाशीति कथ्यते ॥

[2]ब्रह्मपुराणे

चतुःषष्टिपलैः शुद्धैः कुण्डं प्रस्थचतुष्टयम् ।
भवेत्तद्यस्तु निगिरेत्स कुण्डाशी पतत्यधः ॥

यमः

व्रती यः स्त्रियमभ्येति सोऽवकीर्णी निरुच्यते ।
पुनर्भ्वास्तु पतिर्यो वै स भवेद्दिधिषूपतिः ॥

देवलः

ज्येष्ठस्य भार्यां संप्राप्तः सकामाद्दिधिषूपतिः ॥

मनुः [३,१७३]

भ्रातुर्मृतस्य भार्यायां योऽनुरज्येत कामतः ।

(1) 'मन्त्रविद्युतकः' इति मुद्रितवासिष्ठे

(2) हेमाद्रिः, ३६३; वीरमित्रोदयः, ९१ 'प्रस्थं षष्टिपलैः शुद्धैः' इति तत्र पाठः ।

[1]धर्मेणोपनियुक्तायां स ज्ञेयो दिधिषूपतिः ॥

[2]लौगाक्षिः

ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा ।
सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूः स्मृता ॥

[3]यमः

महिषीत्युच्यते नारी सा चैव व्यभिचारिणी ।
तं दोषं क्षमते यस्तु स वै माहिषिकः स्मृतः ॥

देवलः

यश्च दुष्टतपश्चर्यः स गूढो नाम संज्ञया ।
[4]भृतकाध्यापको यश्च भृतकाध्यापितश्च यः ॥
तावुभौ पतितौ विप्रौ स्वाध्यायक्रयविक्रयात् ।
यः शूद्रान् पतितांश्चापि याजयेदर्थकारणात् ॥
याजितो वा पुनस्ताभ्यां ब्राह्मणोऽयाज्ययाजकः ।
दत्तानुयोगान् द्रव्यार्थं पतितान् मनुरब्रवीत् ॥
ब्रह्मविक्रयिणो ह्येते वर्जिताः सवनादिषु ।
इष्टं पूर्तमधीतं वा तप्तं वाप्यात्मना तपः ॥
प्रयच्छन्त्यपरेभ्यश्च धनार्थं धर्मविक्रयी ।
[5]गोरसानां च विक्रेता गोविक्रेता च यो द्विजः ॥

(1) 'धर्मेणापि नियुक्तायाम्' नियोगधर्मेण प्रवृत्तो भ्रातुर्मृतस्य तद्भार्या-गमने योऽनुरज्येत प्रीतिं भावयेत्, 'कामतः' नियोगधर्मातिक्रमेण 'सकृत्सकृद्दतौ' इत्येवं विधिं हित्वा, इच्छानुरागं गाढालिङ्गनपरिचुम्बनादि कुर्यादसकृद्वा प्रवर्तेत, चेतसा वा विक्रियेत, कामिनीप्रेमदृष्टिबन्धवचनादिलिङ्गेनानुरागत्वेन विभावितो 'दिधिषूपति' र्वेद्यः । (मेधातिथिः)

(2) Ascribed to Devala by वी. मि., ९१

(3) 'अन्ये तु' इति वी. मि., ९२ ; a slightly different form of the śloka is ascribed to ब्रह्माण्डपुराण (वी. मि., ९२)

(4) हेमाद्रिः, ३६८.

(5) हेमाद्रिः, ३६६

गुडलवणतिलानां विक्रेता दुष्टविक्रयी ।
आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयन् ॥
लोभाद्यः प्रचिनोत्यर्थान् स कदर्य इति स्थितिः ।
[1]निकृष्टोत्कृष्टमध्येषु यो वर्णेष्वनवग्रहः ॥
आचरत्यपराचारं वर्णसंभेदकस्तु सः ।
अनाहिताग्निः शतगुरनीजानः सहस्रगुः ॥
शूद्राजीवोपजीवी च नार्हन्त्यर्घान् द्विजातयः ।
कूपमात्रोदके ग्रामे विप्रः संवत्सरं वसन् ॥
शौचाचारपरिभ्रंशाद्‌ब्राह्मण्याद्विप्रमुच्यते ।
अनुपासितसंध्या ये नित्यमस्नातभोजनाः ॥
भ्रष्टशौचाः पतन्त्येते शूद्रतुल्याश्च धर्मतः ।
एकाकी व्यसनाक्रान्तो धन्य इत्युच्यते बुधैः ॥
देवकोशोपजीवी च नाम्ना देवलको भवेत् ॥

'अनवग्रहः' त्यक्तशास्त्रप्रतिनियमः । 'अपराचारम्' अन्त्यवर्णोचिताचारम् ॥

यमः

समर्घं पण्यमाहृत्य महार्घं यः प्रयच्छति ।
स वै वार्धुषिको नाम यश्च वृद्ध्या प्रयोजयेत् ॥

तथा

यश्च निन्द्यात् परं जीवन् प्रशंसत्यात्मनो गुणान् ।
स वै वार्धुषिको नाम ब्रह्मवादिषु गर्हितः ॥

'जीवन्' जीवनहेतोरित्यर्थः ।

तथा

अग्नीनुत्सादयेद्यस्तु वीरहा स निरुच्यते ॥

(1) हेमाद्रिः, ३६६

देवलः

यः सगोत्रां समारूढो ब्राह्मणो गोत्रभिद्भवेत् ।
वैश्यापतिः कृष्णपृष्ठः काण्डपृष्ठो नरो भवेत् ॥

क्षत्रियवैश्यवृत्त्यनन्तरं नारदः [४,६०]

तस्यामेव च यो वृत्तौ ब्राह्मणो रमते रसात्[1] ।
काण्डपृष्ठश्च्युतो मार्गात् सोऽपाङ्क्तेयः प्रकीर्तितः ॥

हारीतः

शूद्रापुत्राः स्वयंदत्ता ये चैते क्रीतकाः सुताः ।
सर्वे ते मैत्रिणा प्रोक्ताः काण्डपृष्ठा न संशयः ॥
काण्डमेषां कुलस्याख्या पर्वाण्याहुर्युगानि तु ।
यस्तु तं न्यायतो रक्षेत्स कुलीन इति स्मृतः ॥
[2]स्वकुलं पृष्ठतः कृत्वा यो वै परकुलं व्रजेत् ।
तेन दुश्चरितेनासौ काण्डपृष्ठो न संशयः ॥

यमः

आपद्गतो ह्युपनतो यश्च स्याद्वैष्णवीसुतः ।
[3]सर्वे ते मनुना प्रोक्ताः काण्डपृष्ठास्त्रयः स्मृताः ॥
कुलं काण्डमिति ख्यातं तस्मात्पर्वाणि ते जगुः ।
तत्र ज्येष्ठनरो यस्मात्तं वै काण्डेति निर्दिशेत् ॥
स्वकुलं पृष्ठतः कृत्वा यो वै परकुलं व्रजेत् ।
तेन दुश्चरितेनासौ काण्डपृष्ठ इति स्मृतः ॥

(1) 'सदा' इति मुद्रितनारदीये

(2) हेमाद्रिः, ३६३

(3) 'इत्येते' इति हेमाद्रि(३६३)पाठः । मासोपवासादिव्रतैः विष्णोराराधनतत्परा विधवा 'वैष्णवी', तस्यां तदवस्थायां सवर्णादुत्पन्नः 'वैष्णवीसुतः' । (हेमाद्रिः, ३६३)

देवलः

राजप्रेष्यकरो नित्यं ब्राह्मणो विकृतः स्मृतः ।
अधीतविस्मृते वेदे भवेद्विप्रो निराकृतिः ॥

[1]छन्दोगपरिशिष्टे कात्यायनः

यः स्वाध्यायाग्निमांस्तस्माद्देवादीन्नैभिरिष्टवान् ।
निराकर्तामरादीनां स विज्ञेयो निराकृतिः ॥

'देवादीन्नैभिः' इति, अवश्यकृत्यदर्शपौर्णमासादियागद्वारेण ।

देवलः

गूढलिङ्ग्यवकीर्णी स्याद्यश्च भग्नव्रतस्तथा[2] ।
धर्माधर्मविभागज्ञो निविष्टो वेदशासने ॥
कृपालज्जाक्षमाधीमानार्यो म्लेच्छो विपर्यये ।
द्वितीयस्य पितुर्योऽन्नं भुक्त्वा परिणतो द्विजः ॥
अवरेढ इति ज्ञेयः [3]शूद्रधर्मेण जीवनः ।
भवेत्कारणसंज्ञश्च सर्वेषु व्यवहारवान् ॥
अगारदाही स ज्ञेयः प्रेतदग्धा ह्यनेकशः ।
स चाप्यगारदाही स्याद्यो द्वेषाद्वेश्मदाहकः ॥
क्षेत्रसस्यवनानां च दग्धारोऽरण्यदाहिनः ।
[4]षण्डको वातजः षण्डः षण्डः क्लीबो नपुंसकः ॥
कीलकश्चेति षट्कोऽयं षण्डभेदो विभावितः[5] ।
तेषां स्त्रीतुल्यवाक्चेष्टः स्त्रीधर्मा षण्डको भवेत् ॥

(1) श्राद्धप्रकाशः, ९०

(2) 'गूढलिङ्गी' ब्रह्मचर्याश्रमोपदिष्टदण्डादिलिङ्गरहितः । 'भग्नव्रतः' विप्लुतब्रह्मचर्यः । (हेमाद्रिः, ३५९)

(3) 'शूद्रधर्मा स जातितः' इति (हेमाद्रिपाठः (३६०)

(4) हेमाद्रिः, ३६९ ; श्राद्धप्रकाशः, ८१

(5) 'विभाषितः' इति हेमा. पाठः ।

पुमान् भूत्वा [1]स्वलिङ्गानि पश्चाच्छिन्द्यात्तथैव च ।
स्त्री च पुंभावमास्थाय पुरुषाचारवद्गुणा ॥
वातजो नाम षण्डस्स्यात् स्त्रीषण्डो वाऽपि नामतः ।
[2]असल्लिङ्गोऽपि षण्डस्स्यात् षण्डस्तु म्लानमेहनः ॥
[3]स कीलक इति प्रोक्तो यः क्लैब्यादात्मनः स्त्रियम् ।
अन्येन सह संयोज्य पश्चात्तामेव सेवते ॥

स्कन्दपुराणे

ईश्वर उवाच—
परीक्ष्य श्राद्धं दातव्यमित्येवं वैदिकी श्रुतिः ।
परीक्षणाच्च रम्भोरु आर्जवं गुणवत्तरम् ॥
अपरीक्ष्य तु यो दद्याच्छ्राद्धमार्जवमास्थितः ।
तस्य तुष्यन्ति पितरो देवताश्च न संशयः ॥

(1) 'सलिङ्गानि' इति श्राद्धप्रकाशे ।
(2) 'अस्त्रीलिङ्गो' इति हेमाद्रिः । 'असल्लिङ्ग' इति श्राद्धप्रकाशे ।
(3) "अमेध्याशी पुमान् क्लीबो नष्टरेता नपुंसकः" इत्यधिकः श्लोकार्धः श्राद्धप्रकाशे ।

## ॥ ११ ॥

## ॥ अथ निमन्त्रणं निमन्त्रितनियमाश्च ॥

तत्र देवलः

अक्रोधो निभृतः[1] स्वस्थः श्रद्धावानत्वरः शुचिः ।
समाहितमनास्तत्र[2] क्रियायामसकृत्सदा ॥

[तथा][3]

श्वः कर्तास्मीति निश्चित्य दाता विप्रान्निमन्त्रयेत् ।
निरामिषं सकृद्भुक्त्वा सर्वभुक्तजने गृहे ॥
असंभवे परेद्युर्वा ब्राह्मणांस्तान्निमन्त्रयेत् ।
अज्ञातीनसमानार्षानयुग्मानात्मशक्तितः[4] ॥

'निभृतो'ऽत्र विविक्तदेशस्थितः । 'समाहितमनाः' द्रव्यादौ । अयमर्थः—'असकृत्' पुनः पुनः, श्राद्धे तथा भवितव्यं यथा मनो नाऽसंयतं भवतीति । 'निरामिषं सकृद्भुक्त्वा' इति पूर्वेद्युःपरेद्युर्निमन्त्रणयोः साधारणम् । 'सर्वभुक्तजने' सर्वे भुक्तवन्तो जना यस्मिन् स तथा । 'असंभवे' कुतश्चिन्निमित्तात्पूर्वेद्युर्निमन्त्रणाऽसंपत्तौ । 'आर्षाः' प्रवराः ॥

शङ्खलिखितौ ॥

जन्मशरीरलक्षणगुणोपेतान् ब्राह्मणानामन्त्रयेत् । श्वोऽद्येति वा श्राद्धमाचरिष्य इति ॥

(1) 'निर्वृतः' इति समुत्पन्नः ; 'असकृत्' श्राद्धसमाप्तिपर्यन्तम् ।
(2) 'श्राद्धक्रियायां' इति हेमाद्रिपाठः (पृ. १०११)
(3) हेमाद्रिः, ११३१—'अज्ञातीन्' यजमानाभिन्नगोत्रान् ।
(4) 'अयुग्मान् विषमसंख्यान् (हेमाद्रिः, ११३२)

मार्कण्डेयपुराणे [३१,३०,३३,३४]

निमन्त्रयेत पूर्वेद्युः पूर्वोक्तान द्विजसत्तमान् ।
अप्राप्तौ तद्दिने वापि हित्वा योषित्प्रसङ्गिनम् ॥
भिक्षार्थमागतान्वापि काले संयमिनो यतीन् ।
भोजयेत् प्रणिपाताद्यैः प्रसाद्य यतमानसः ॥

'अप्राप्तिः' अत्रासंभवः ॥

मनुः [३,१८७]

[1]पूर्वेद्युरपरेद्युर्वा श्राद्धकर्मण्युपस्थिते ।
निमन्त्रयेत त्र्यवरान् सम्यग्विप्रान् यथोदितान् ॥

[2]उशना

तत्र गोमयोदकैर्भूमिमार्जनं भाण्डशौचं कृत्वा श्वः कर्तास्मीति ब्राह्मणान् निमन्त्रयेच्चतुरवरान् ॥

'चतुरवरान्' द्वौ दैवे, एकैकं पितृमातामहवर्गयोः ॥

वाराहपुराणे

[3]वस्त्रशौचादि कर्तव्यं श्वः कर्तास्मीति जानता ।
स्थानोपलेपनं भूमिं कृत्वा विप्रं निमन्त्रयेत् ॥
दन्तकाष्ठं च विसृजेद्‌ब्रह्मचारी शुचिर्भवेत् ।

'भूमिं कृत्वा' दक्षिणाप्रवणादिगुणोपेताम् । 'विसृजेत्' ब्राह्मणेभ्यो दद्यात् ॥

(1) यः शक्नोति नियमान् पालयितुं सः पूर्वेद्युः, अशक्तस्तु तदहरेव । (मेधातिथिः)

(2) १०८, श्राद्धप्रकाशः ॥ 'स्वः कर्तास्मि' इति तत्र पाठः । 'अत्र गोमयादिग्रहणं सकलशुद्धिसाधनद्रव्योपलक्षणम्' इति ।

(3) हेमाद्रिः, ११५०

आपस्तम्बः [२,१७,११-१७]

पूर्वेद्युर्निवेदनम् । अपरेद्युर्द्वितीयम् । तृतीयमामन्त्रणम् । त्रिःप्रायमेके श्राद्धमुपदिशन्ति । यथा प्रथममेवं द्वितीयं तृतीयं च ॥

सर्वेष्वेव विप्रेषु निवेदनं श्वो मया श्राद्धं कर्तव्यम्, तत्र भवन्तो निमन्त्रणीया इति । ब्राह्मणचोदनमपपरेद्युः प्रातःकाले । भोजनकाले चामन्त्रणम् ॥

[1]मत्स्यपुराणे

दक्षिणं जानुमालभ्य त्वं मयात्र निमन्त्रितः ।
एवं निमन्त्र्य नियमाञ्श्रावयेत् [2]पैतृकान् बुधः ॥

तानेवाह—

अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः ।
भवितव्यं भवद्भिश्च मयात्र श्राद्धकर्मणि ॥

यमः

साधुभिः सन्निमन्त्रयेत् ॥
तस्य ते पितरः श्रुत्वा श्राद्धकालमुपस्थितम् ।
अन्योन्यं मनसा ध्यात्वा संपतन्ति मनोजवाः ॥

तथा

ब्राह्मणैश्च सहाश्नन्ति पितरो ह्यन्तरिक्षगाः ।
वायुभूता न दृश्यन्ते भुक्त्वा यान्ति परां गतिम् ॥

[3]'साधुभिः संनिमन्त्रये'दिति स्वयं निमन्त्रणासंभवे । 'भवितव्यं भवद्भिश्च मयात्र श्राद्धकर्मणि'

(1) हेमाद्रिः, १२५८

(2) 'पितृबान्धवः' इति हेमाद्रिपाठः; प्रकृतश्राद्धसम्बन्धिपितृसपिण्डसमानोदकादिस्तत्प्रेषितो वा निमन्त्रणकर्ता । अत्र केचिद्दक्षिणजान्वालम्भनं वैश्वदेविकद्विजनिमन्त्रणविषयमाहुः । तदयुक्तम् ॥ (हेमाद्रिः)

(3) 'साधुभिरपि सवर्णैरेव निमन्त्रणं कारयितव्यम्' । (हेमाद्रिः, ११३८)

इत्यभिधानेन लिङ्गेन स्वयं निमन्त्रणस्य मुख्यत्वात् ।

यमशातातपौ

अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमन्त्रितम् ।
तथैव वृषलस्यान्नं ब्राह्मणेन निमन्त्रितम् ॥

याज्ञवल्क्यः [१, २२५]

निमन्त्रयेत पूर्वेद्युर्ब्राह्मणानात्मवान् शुचिः ।
तैश्चापि संयतैर्भाव्यं मनोवाक्कायकर्मभिः ॥

श्राद्धाधिकारे आपस्तम्बः [२, १८, २४]

आरब्धे चाऽभोजनमासमापनात् ॥

॥ निमन्त्रितनियमाः ॥

यमः

आमन्त्रितास्तु ये विप्राः श्राद्धकाल उपस्थिते ।
वसेयुर्नियताहारा ब्रह्मचर्यपरायणाः ॥

यमः

निमन्त्रितो द्विजः पित्र्ये नियतात्मा भवेत्सदा ।
न च छन्दांस्यधीयीत यस्य श्राद्धं च तद्भवेत् ॥

हारीतः

पूर्वेद्युर्मन्त्रितान् विप्रान् पितरः संविशन्ति वै ।
यजमानं च तां रात्रिं वसेयुर्नियतास्ततः ॥

कात्यायनः [श्राद्धकल्प, १, २३–२५]

तदहः शुचिरक्रोधनो त्वरितोऽप्रमत्तः सत्यवादी स्यादध्वमैथुनश्रमस्वाध्यायान् वर्जयेत् । आवाहनादि वाग्यत [1]उपस्पर्शनात् । आमन्त्रिताश्चैवम् ॥

(1) 'वाग्यत ओपस्पर्शनात्' इति मुद्रितश्राद्धकल्पे (चौखाम्बाकोश, ८४१) । 'आ उपस्पर्शनात्' इति तत्र व्याख्यातञ्च ।

'उपस्पर्शनात्' भोक्तॄणामन्त्याचमनपर्यन्तम् ।

यमः

अहिंसा सत्यमक्रोधो दूरे[1] चागमनक्रिया ।
अभारोद्वहनं क्षान्तिः श्राद्धस्योपासनाविधिः ॥

कात्यायनः [श्राद्धकल्प, १, १२-१३]

अनिन्द्येनामन्त्रितो नापक्रामेत् । [2]निमन्त्रितो नान्य-दन्नं प्रतिगृह्णीयात् ॥

यमः, मनुश्च प्रथमे [मनु, ३, १९०]

केतितस्तु यथान्यायं ब्राह्मणो हव्यकव्ययोः ।
कथञ्चिदप्यतिक्रामन् पापः सूकरतां व्रजेत्[3] ॥
ब्राह्मणं च स्वयं कृत्वा देवतापितृभिः सह ।
यदन्नं समुपाश्नन्ति तस्मात्तन्न व्यतिक्रमेत् ॥
केतनं कारयित्वा तु योऽतिपातयति द्विजः ।
ब्रह्महत्यामवाप्नोति शूद्रयोनौ च जायते[4] ॥

तथा

आमन्त्रितस्तु यः श्राद्धे त्वन्यस्य कुरुते क्षणम् ।
संवत्सरकृतं पुण्यं तस्य नश्यति दुर्मतेः[5] ॥

(1) 'दूरे' सीम्नः परस्तात् । न गन्तव्यमित्यर्थः । श्रा. प्र., (१११)
(2) 'आमन्त्रितो वाऽन्यदन्नं' इति मु. श्रा. कल्पे (८३८)
(3) यमवचनमित्थं हेमाद्रिणा (१००१) धृतमस्ति—
आमन्त्रितस्तु विधिवद्ब्राह्मणो हव्यकव्ययोः ।
कथञ्चिदप्यतिक्रामन् पापः सूकरतां व्रजेत् ॥
मनुवचने 'हव्ये कव्ये द्विजोत्तमः' इति मेधातिथ्यादिधृतपाठः ।
(4) अयं श्लोकः नारायणकृत इति पराशरमाधवीये (i, ii, ३६६)
(5) एष श्लोकः नारयणकृत इति हेमाद्रिः (१००२)

तथा

आमन्त्र्य ब्राह्मणं यस्तु यथान्यायं न पूजयेत्।
अतिकृच्छ्रासु घोरासु तिर्यग्योनिषु जायते[1] ॥

'अन्यस्य कुरुते क्षणम्' अन्यस्यामन्त्रणं स्वीकरोतीत्यर्थः॥

ब्रह्मपुराणे

आमन्त्रितश्चिरं नैव कुर्याद्विप्रः कदाचन।
देवतानां पितॄणां च दातुरन्यस्य चैव हि ॥
चिरकारी भवेद्द्रोग्धा पच्यते नरकाग्निना।

'चिरकारी' विलम्बकारी।

महाभारते [अनु., ६१, ५४]

[2]दैवं वा यदि वा पित्र्यं योऽश्नीयाद्ब्राह्मणादिषु ॥

हारीतः[3]

दैवे वा यदि वा पित्र्ये निमन्त्र्य ब्राह्मणं यदि।
तर्पयेन्न यथान्यायं स तु तस्य फलं हरेत् ॥
प्रमादाद्विस्मृतं ज्ञात्वा प्रसाद्यैनं प्रयत्नतः।
तर्पयित्वा विशेषेण सर्वं तत्फलमाप्नुयात् ॥

देवलः

श्राद्धे निमन्त्रितो विप्रो वृषलीं[4] यदि गच्छति।
दातुः पापं समग्रं तत् क्षणेन प्रतिपद्यते ॥

(1) 'यम' इति हेमाद्रिः, (१०१२)

(2) 'अज्ञातो ब्राह्मणो राजंस्तस्याधर्मोऽनृतं स्मृतम्'। इति कुम्भघोणकोशे उत्तरार्धम्।

(3) हेमाद्रिः, १०१२

(4) 'वृषली' इति शूद्रा। पारिभाषिकन्तु वृषलीमाह उशना—'वन्ध्या तु वृषली ज्ञेया वृषली च मृतप्रजा। अपरा वृषली ज्ञेया कुमारी च रजस्वला' ॥ इति। प्रभासखण्डे—'वृषलीत्युच्यते शूद्रा' इति। तत्रैव—स्ववृषं [स्वधर्मं] च परित्यज्य परेण तु वृषायते। वृषली सा तु विज्ञेया न शूद्रा वृषलीयते ॥ चाण्डाली बन्धकी वेश्या रजःस्था या च कन्यका। ऊढा वा च स्वगोत्रा स्याद्वृषल्यः परिकीर्तिताः ॥ [हेमाद्रिः, ३५७]

पूर्वं निमन्त्रितोऽन्येन कुर्यादन्यपरिग्रहम् ।
भुक्ताऽऽहारेण वा भुङ्क्ते सुकृतं तस्य नश्यति ॥
तस्माद्दोषान् परित्यज्य तानेतानपरानपि ।
ब्रह्मचारी शुचिर्भूत्वा श्राद्धं भुञ्जीत शक्तिमान् ॥
[1]त्रीनेव यन्त्रितो दाता भुक्ताहारेण भोजयेत् ।

'त्रीनेव' निमन्त्रितब्राह्मणान् । 'यन्त्रितः' नियतः । 'भुक्ताहारेण' भोजनं कृत्वेत्यर्थः ॥

अत्र यमः आद्यश्लोकत्रये उशना च

आमन्त्रितस्तु यः श्राद्धे अध्वानं व्रजति द्विजः ।
भवन्ति पितरस्तस्य तं मासं पांसुभोजनाः[2] ॥
आमन्त्रितस्तु यः श्राद्धे भारमुद्वहति द्विजः ।
पितरस्तस्य तं मासं भवन्ति स्वेदभोजनाः[3] ॥
आमन्त्रितस्तु यः श्राद्धे हिंसां वै कुरुते द्विजः ।
तं मासं पितरस्तस्य भवन्ति रुधिराशनाः[4] ॥
आमन्त्रितस्तु यः श्राद्धे आयासं कुरुते द्विजः ।
भवन्ति पितरस्तस्य तं तु मासमनिर्वृताः ॥
आमन्त्रितस्तु यः श्राद्धे वृषल्या सह मोदते ।
भवन्ति पितरस्तस्य तं मासं शुक्रभोजनाः[5] ॥

(1) हेमाद्रिः, १००६-'त्रीन्' स्त्रीसम्भोगान्यप्रतिग्रहपुनर्भोजनाख्यान् ॥

(2) हेमाद्रिः, १००७

(3) हेमाद्रिः, १००८-'यमोशनसौ' इति ।

(4) हेमाद्रिः, १००८-'यमोशनसौ' इति ।

(5) 'यमोशनसौ' इति हेमाद्रिः, १००६; 'अत्र वृषलीशब्दः स्त्रीमात्रोपलक्षणार्थः । सामान्य एव ब्रह्मचर्यस्य विधानात् । 'वृषं' भर्तारं 'लाति' स्वीकुरुते इति व्युत्पत्त्या ब्राह्मण्यपि वृषल्येवेति हेमाद्रौ व्याख्यातम् [ हे. १००६] । शूद्रीगमने दोषाधिक्यपराणि एतानि वचनानीत्यन्ये । अत्र मैथुनं ऋतुमत्यामपि स्वभार्यायां न कर्तव्यम् ॥ (श्राद्धप्रकाशः, १११) 'मोदनं' हर्षोत्पत्तिः, तेन संलापालिङ्गनाद्यपि न कर्तव्यम् (हेमाद्रिः, १००६)

आमन्त्रितस्तु यः श्राद्धे कलहं कुरुते द्विजः ।
भवन्ति पितरस्तस्य तं मासं मलभोजनाः[1] ॥
तस्मान्निमन्त्रितः श्राद्धे नियतात्मा भवेद्द्विजः ।
अक्रोधनः शौचपरः सत्यवादी जितेन्द्रियः ॥

शङ्खः

निमन्त्रितस्तु यः श्राद्धे मैथुनं सेवते द्विजः ।
श्राद्धं दत्त्वा च भुक्त्वा च युक्तः स्यान्महतैनसा ॥

मनुः [३, १९२-२०१]

अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः ।
न्यस्तशस्त्रा महाभागाः पितरः पूर्वदेवताः ॥
यस्मादुत्पत्तिरेतेषां सर्वेषामप्यशेषतः ।
ये च यैरुपचर्याः स्युर्नियमैस्तान्निबोधत ॥
[2]मनोर्हिरण्यगर्भस्य ये मरीच्यादयः सुताः ।
तेषामृषीणां सर्वेषां पुत्राः पितृगणाः स्मृताः ॥
विराट्सुताः [3]सोमसदः साध्यानां पितरः स्मृताः ।
अग्निष्वात्ताश्च देवानां मारीचा लोकविश्रुताः ॥
दैत्यदानवयक्षाणां गन्धर्वोरगरक्षसाम् ।
सुपर्णकिन्नराणां च स्मृता बर्हिषदोऽत्रिजाः ॥
सोमपा नाम विप्राणां क्षत्रियाणां हविर्भुजः ।
वैश्यानामाज्यपा नाम शूद्राणां तु सुकालिनः ॥

(1) 'उशना' इति हेमाद्रिः (१००८)
(2) अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम् ।
पतीन् प्रजानामसृजं महर्षीनादितो दश ॥
मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ॥
प्रचेतसं वसिष्ठं च भृगुं नारदमेव च ॥ (मनुः, १,३४-३५)
(3) 'सोमसुताः' इति नान्दिनीपाठः ।

सोमपाश्च कवेः पुत्रा हविष्मन्तोऽङ्गिरःसुताः ।
पुलस्त्यस्याज्यपा नाम[1] वसिष्ठस्य सुकालिनः ॥
[2]अग्निदग्धानग्निदग्धान् काव्यान् बर्हिषदस्तथा[3] ।
अग्निष्वात्तांश्च सौम्यांश्च विप्राणामेव निर्दिशेत् ॥
य एते तु गणा मुख्याः पितॄणां परिकीर्तिताः ।
तेषामपीह विज्ञेयं पुत्रपौत्रमनन्तकम्[4] ॥
ऋषिभ्यः पितरो जाताः पितृभ्यो देवमानवाः ।
देवेभ्यश्च जगत्सर्वं चरस्थाण्वनुपूर्वशः[5] ॥

हारीतः[6]

सोमो यमोऽङ्गिराश्चैव सोमपाः पितरस्तथा ।
अग्निष्वात्ता बर्हिषदो हुतादः षड्विधो गणः ॥
चन्द्रमा ऋतवश्चैव मृतं योऽग्निर्दहत्यपि ।
सोमोपहूताः प्राक्सोमा अनीजानाश्च ब्राह्मणाः ॥
षड्विधोऽप्ययं गणो 'हुतादः' ।

अत्र निगमः

ये हता तत्र सङ्ग्रामे पितरस्ते त्रिधा भवन् ।
यद्धुतं पितृयज्ञेषु तेषां गच्छति तद्धविः ॥

(1) 'पुत्राः' इति मेधातिथिपाठः

(2) 'अनग्निदग्धाग्निदग्धान्' इति मेधातिथिः । 'अनग्निदग्धानग्नि-दग्धान्' इति गोविन्दराजः ॥

(3) 'बर्हिषदोऽपरान्' इति राघवानन्दः, 'बर्हिषदो बहून्' इति सर्वज्ञ-नारायणः ॥

(4) 'अनन्तरं' इति उदयपुरकोशपाठः । 'अनन्तकं' (अपरिमितं) इति मेधातिथिपाठः ।

(5) "ऋषिभ्यः पितरो देवाः पितृभ्यो देवमानवाः । देवेभ्यश्च जगत्सर्वं रंस्था (?) एवानुपूर्वशः ॥" इति उदयपुरकोशे । अत्रादृतपाठस्तु मेधातिथि-प्रभृतिनिबन्धकर्तृसम्मतः ।

(6) हेमाद्रिः, ४६.

अस्य च सर्वस्यायं तात्पर्यार्थः। यथा आवाहनकाले प्रमीताः पित्रादयो ब्राह्मणादिवर्णैरग्निष्वात्तादिरूपिणो ध्येया इति [1] ॥

॥ इति निमन्त्रणं निमन्त्रितनियमाश्च ॥

(1) 'तत्र' इति वृत्रसङ्ग्रामे ये हताः देवाः ते पितरोऽभवन्। 'त्रिधा' इति अरस्तेमन्ताग्निग्निय इति। एत एव सोमवन्तो बर्हिषदोऽग्निष्वात्ताश्च ॥(हेमाद्रिः,४४)

## ॥ १२ ॥

## ॥ प्रागावाहनाच्छ्राद्धविधिः ॥

अत्रावाहनात् पूर्वं श्राद्धविधिः । तत्र 'पूर्वेद्युर्ब्राह्मणानामन्त्रयेद्' इत्यधिकारे—

हारीतः[1]

अथ श्वोभूते दक्षिणां दिशं गत्वा दक्षिणाप्रणतान् समूलान् दर्भानाहरेत् । अपरिगृहीताश्चापः ।

[यमः[2]]

समूलस्तु भवेद्दर्भः पितॄणां श्राद्धकर्मणि ।
मूलेन लोकान् जयति शक्रस्य तु महात्मनः ॥

गोभिलः [१,५,१७-१९]

[विशाखानि प्रतिलूनाः कुशा] बर्हिः । उपमूललूनाः पितृभ्यः । तदलाभे शूकतृणशरशीर्यबल्वजमुतवनलशुण्ठवर्जं सर्वतृणानि ॥[3]

(1) हेमाद्रिः, ११७१. तत्रैव कुशाहरणं कूर्मपुराणे यथा—
श्वोभूते दाक्षिणां गत्वा दिशं दर्भान् समाहितः ।
समूलमाहरेद्वारि दाक्षिणाग्रं तु निर्मलम् ॥

'अपरिगृहीताः' पूर्वमन्येनास्वीकृताः । 'दाक्षिणाग्रं' दक्षिणाप्रवाहं जलाशयं दाक्षिणभागस्थितं वा ॥

(2) 'यमः' इति मूलकोशे नास्ति । हेमाद्रिः, ११७१

(3) मूलसमीपप्रदेशेषु ये लूनाः ते 'उपमूललूनाः ।' तेषां यथोपदिष्टानां कुशमूलानामलाभे । बर्हिषोऽर्थे सर्वतृणान्युपादेयानि शूकतृणादिवर्जम् । 'शूकानि' पुष्पफलमञ्जर्यः । तानि येषां तृणानां सन्ति तानि 'शूकतृणानि' । शरशीर्यादीनि प्रसिद्धानि ॥ (नारायणभाष्ये)

'शूकतृणं' शूकवत्तृणम्। शरशीर्यबल्वजाश्चण्डांशुतृण-जातिविशेषास्तत्तद्देशप्रसिद्धाः।

ब्रह्मपुराणे

हरिताश्च सपिञ्जूलाः स्निग्धाः पुष्टाः समाहिताः।
गोकर्णमात्रास्तु कुशाः सकृच्छिन्नाः समूलकाः ॥[1]
पितृतीर्थेन देयाश्च दूर्वाः श्यामाकमेव च।
काशाः कुशा बल्वजाश्च तथान्ये तीक्ष्णरोमशाः॥
मौञ्जं च शाद्वलं चैव षड्दर्भाः[2] परिकीर्तिताः॥
श्राद्धे वर्ज्याः प्रयत्नेन ह्युलपश्चुपबल्वजाः॥

दूर्वायाः श्यामाकस्य च काशादिवत्कुशाभावे विधिः। 'पिञ्जूलं' पवित्रम्। 'समाहिताः' निर्दोषाः। 'गोकर्णमात्राः' प्रादेशमात्राः साग्रा इति यावत्। 'उलपः' कुशसदृशस्तृण-विशेषः॥

वायुपुराणे

रत्निप्रमाणाः शस्ता वै पितृतीर्थेन संस्कृताः।
उपमूले तथा लूनाः प्रस्तरार्थे कुशोत्तमाः॥

तथा

गुन्द्रा श्राद्धे क्षीरकुशा बल्वजा गन्धकी तथा।
वीरणाश्चोलपश्चैव लम्बा वर्ज्याश्च नित्यशः॥

'संस्कृताः' संसृष्टाः। 'प्रस्तरः' अत्र पिण्डसंस्तरः। 'गुन्द्रः' भद्रमुस्तकः। 'क्षीरकुशः' प्रत्यग्रजातः। 'गन्धकी'

(1) 'सपिञ्जूलाः' अपृथक्कृतदलाः। 'समाहिताः' निर्दोषाः। 'गोकर्णमात्रा.' अङ्गुष्ठानामिकाविस्तारदीर्घाः॥ (श्राद्धचन्द्रिका, २१)

(2) अत्रिणा प्रोक्ताः दश दर्भाः:—

कुशाः काशा यवा दूर्वा उशीराश्च सकुन्दराः।
गोधूमा व्रीहयो मुञ्जा दश दर्भाः सबल्वजाः॥ (हेमाद्रिः, ६४२)

गन्धतृणानि ॥ 'लम्बाः' उक्तप्रमाणाधिकाः कुशा एव दीर्घाः ॥

मनुर्बृहस्पतिश्च[1] प्रथमे

शुचिं देशं विविक्तं च गोमयेनोपलेपयेत् ।
दक्षिणाप्रवणं चैव प्रयत्नेनोपपादयेत् ॥
अवकाशेषु चोक्षेषु [2]जलतीर्थेषु चैव हि ।
विविक्तेषु च दत्तेन तृप्यन्ति पितरः सदा ॥

'अवकाशेषु चोक्षेषु' मनोहरेषु देशेषु । 'विविक्तेषु' विजनेषु वनादिष्वपि ॥

यमः

रूक्षं कृमिवृतं क्लिन्नं संकीर्णानिष्टगन्धिकम् ।
देशं त्वनिष्टशब्दं च वर्जयेच्छ्राद्धकर्मणि[3] ॥
दक्षिणाप्रवणं स्निग्धं विविक्तं शुभलक्षणम् ।
शुचिं देशं परीक्ष्याथ गोमयेनोपलेपयेत्[4] ॥
अगारेषु विविक्तेषु तीर्थेषु च नदीषु च ।
विविक्तेषु च देशेषु तुष्यन्ति पितरः सदा ।[1]
पारक्ये भूमिभागे तु पितॄणां निर्वपेत्तु यः ।
तद्भूमिस्वामिपितृभिः श्राद्धकर्म विहन्यते ॥
तस्माच्छ्राद्धानि देयानि पुण्येष्वायतनेषु च ।
नदीतीरेषु तीर्थेषु स्वभूमौ च प्रयत्नतः ॥

(1) मनुः, ३,२०६–२०७.

(2) 'जलतीरेषु' इति मेधातिथिगोविन्दराजपाठः । 'नदीतीरेषु' इति कुल्लूकः ।

(3) हेमाद्रिः, १६३; 'अनिष्टशब्दम्' प्रातिकूलशब्दमित्यर्थः ॥ 'रूक्षम्' 'अस्निग्धम्, 'क्लिन्नम्' पङ्किलम्' 'सङ्कीर्णं' पदार्थान्तरैराकीर्णम्, 'अनिष्टगन्धिकम्' पूतिगन्धादियुतम्, 'प्लुष्टं' अग्निदग्धम्, 'परकीयं' परगृहीतं गृहगोष्ठादि, न तु गिरिसरिदरण्यतीर्थानि तस्यास्वामिकत्वात् ॥ (श्राद्धकल्पलता, ३५)

(4) हेमाद्रिः, १६०,१६१.

उपह्वरे नितम्बेषु तथा पर्वतसानुषु ।
गोमयेनोपलिप्तेषु विविक्तेषु गृहेषु च ॥

'क्लिन्नम्' पङ्किलम् ॥ [1]'उपह्वरम्' अत्र पर्वतान्तिकम् ॥

ब्रह्मपुराणे

परकीयगृहे यस्तु स्वान् पितॄन् तर्पयेज्जडः ।
तद्भूमिस्वामिनस्तस्य हरन्ति पितरो बलात् ॥[2]
अग्रभागं ततस्तेभ्यो दद्यान्मूल्यं च जीवताम् ।

'अग्रभागः' अत्र श्राद्धीयद्रव्यस्य । 'तेभ्यः' तद्भूमिस्वामिपितृभ्यः ॥

यमः

अटव्यः पर्वताः पुण्या नद्यस्तीर्थानि यानि च ।
सर्वाण्यस्वामिकान्याहुर्न हि तेषु परिग्रहः[3] ॥

[4]ब्रह्मपुराणे

जघान दानवौ विष्णुः पूर्वं तु मधुकैटभौ ।
वृत्रं महेन्द्रश्च ततः पृथ्वी तन्मेदसावृता ॥
अतोऽर्थे मेदिनी सा तु लोके विज्ञायते जनैः ।
तस्माच्छ्राद्धे पञ्चगव्यैर्लेप्या शोध्या तथोल्मुकैः[5] ॥
गौरमृत्तिकया छन्ना प्रकीर्णतिलसर्षपा ।

देवलः

तथैव यन्त्रितो दाता स्नातः प्रातः सहाम्बरः ।
आरभेत नवैः पात्रैरन्नारम्भं च बान्धवैः[6] ॥

(1) हेमाद्रिः, १६१
(2) हेमाद्रिः, १६२
(3) हेमाद्रिः, १६२
(4) हेमाद्रिः, ११६६;
(5) 'उल्मुकैः' समन्तादुल्मुकविधानेन । तत्र 'ये रूपाणीति' पिण्डपितृयज्ञोपदिष्टो मन्त्रश्च प्रयोक्तव्यः । हेमाद्रिः, ११६६
(6) श्राद्धप्रकाशः, १८२

तिलांश्च विकरेत्तत्र सर्वतो बन्धयेदजान् ।
असुरोपहृतं सर्वं तिलैः शुद्ध्यत्यजेन च ॥
ततोऽन्नं बहुसंस्कारं नैकव्यञ्जनभक्ष्यवत् ।
चोष्यपेयसमृद्धं च यथाशक्त्युपकल्पयेत् ॥
[1]ततोऽनिवृत्ते मध्याह्ने लुप्तलोमनखान् द्विजान् ।
अभिगम्य यथामार्गं प्रयच्छेद्दन्तधावनम् ॥
तैलमभ्यञ्जनं स्नानं स्नानीयं च पृथग्विधम् ।
पात्रैरौदुम्बरैर्दद्याद्वैश्वदैवत्यपूर्वकम् ॥
ततः स्नात्वा निवृत्तेभ्यः प्रत्युत्थाय कृताञ्जलिः ।
पाद्यमाचमनीयं च संप्रयच्छेद्यथाक्रमम्[2] ॥

'अन्नारम्भः' पाकोपक्रमः । 'उदुम्बरं' ताम्रम् ॥
श्राद्धकाले समाहूतानलंकुर्वीत तान् द्विजान् ।
श्मश्रुकर्मशिरःस्नानधूपनाभ्यञ्जनाञ्जनैः ॥

मत्स्यपुराणे

उदपात्रं च कांस्यं च मेक्षणं च समित्कुशान् ।
आहरेदपसव्येन सर्वं दक्षिणतः शनैः ॥
एवमासाद्य तत्सर्वं भवनस्याग्रतो भुवि ।
गोमयेनोपलिप्तायां गोमूत्रेण तु मण्डले[3] ॥

(1) श्राद्धप्रकाशः, १८४–क्लृप्तरोमनखानिति तत्राहतपाठः

(2) 'स्नानान्निवृत्तेभ्यः' इति पाठान्तरम् । 'स्नानान्निवृत्तेभ्यः' स्नानसमाप्त्युत्तरकालमाह्वानेन यजमानगृहमागतेभ्यः, 'प्रत्युत्थाय' अञ्जलिमाबध्य 'स्वागतं भवताम्' इति प्रश्नं कृत्वा रथ्याप्रसर्पणनिबन्धनाऽप्रायत्यनिवृत्तये पादप्रक्षालनार्थमाचमनार्थं चोदकं प्रयच्छेत् । पादप्रक्षालनं कृत्वाऽऽचमनं दद्यादित्यर्थः ॥

हेमाद्रिः, ११८०–११८१

(3) हेमाद्रिः, ११८४. 'एवं' "आहरेदपसव्येन सर्वं दक्षिणतः" इति पूर्वोक्तेन प्रकारेण । 'सर्वं' श्राद्धोपकरणम् । 'आसाद्य' श्राद्धप्रदेशे स्थापयित्वा । 'अनुलिप्तायाम् अग्रतो भुवि' गोमयोपलेपनादिसंस्कृते गृहद्वारसंमुखस्थितेऽङ्गणप्रदेशे, 'गोमयेन' गोमूत्रेण च मण्डले कुर्यात् ॥

अक्षताभिः सपुष्पाभिस्तदभ्यर्च्यापसव्यवत् ।
विप्राणां क्षालयेत् पादानभिवन्द्य पुनः पुनः[1] ॥

'उदपात्रम्' अवनेजनाद्यर्थम् । कांस्यं' चरुप्रक्षेपार्थम् । अथ श्राद्धकल्पे पिण्डपितृयज्ञाङ्गानां मेक्षणादीनामुपादानं श्राद्धपिण्डपितृयज्ञयोरेकतन्त्रत्वाभिप्रायम् । मत्स्यपुराण एव श्राद्धपिण्डपितृयज्ञयोरेकतन्त्रत्वं प्रस्तुत्य चरुद्वासनानन्तरं पिण्डपितृयज्ञसामग्रीप्रतिपादनात् ॥

आसनं कुतपं दद्यादितरद्वा पवित्रवत् ।
पादप्रक्षालनं कुर्यात् स्वयमेव विनीतवत् ॥
आसध्वमिति तान् ब्रूयादासनं संस्पृशन्नपि ।
दक्षिणासंस्था आसीरन्न स्पृशेयुः परस्परम् ॥
ब्रह्मोद्याश्च कथाः कुर्युः पितॄणामेतदीप्सितम् ।

'ब्रह्मोद्याः' 'कः स्विदेकाकी चरति' इत्यादिकानि वेदव्याख्यानानि ॥

शङ्खलिखितौ

प्रयतोऽपराह्णे शुचिः शुक्लवासा दर्भेषु तिष्ठन् स्वागतमिति ब्रूयात् । पाद्यार्घ्याचमनीयोदकानि दत्त्वा ब्राह्मणानुपसंगृह्योपवेशयेदासनमन्वालभ्य ॥[2]

ब्रह्मपुराणे

तत्रासनानि देयानि चेलाजिनकुशैः सह ।
पृथक् पृथक् चासनेषु तिलतैलेन दीपकाः ॥[3]

(1) हेमाद्रिः, ११८६

(2) 'उपसंगृह्य' दक्षिणकरेण गृहीत्वा । 'अन्वालभ्य' वामहस्तेन श्राद्धदेशावस्थापितमासनमुपस्पृश्य तत्रोपवेशयेत् । हेमाद्रिः, ११८७

(3) अत्रिः इति हेमाद्रिः (११९०); तत्रैवोक्तम्—'तिलतैलग्रहणं घृतादिप्रशस्तस्नेहोपलक्षणार्थम्, वसाद्यप्रशस्तस्नेहनिवृत्त्यर्थं च ॥

अविच्छिन्नास्तथा देयास्ते तु रक्ष्यास्तु वै द्विजैः ॥

'आसनेषु' आसनसन्निधौ । 'अविच्छिन्नाः' श्राद्धसमाप्तिपर्यन्तस्थायिनः ॥

[देवलकूर्मपुराणौ][1]

ये चात्र पित्र्ये देवानां विप्राः पूर्वं निमन्त्रिताः ।
प्राङ्मुखान्यासनान्येषां द्विदर्भोपहितानि च ॥
दक्षिणामुखयुक्तानि पितॄणामासनानि तु ।
दक्षिणाग्रैकदर्भाणि प्रोक्षितानि तिलोदकैः ॥

'दक्षिणामुखयुक्तानि' दक्षिणाग्राणि । अग्रत्वं च काष्ठमूलभागापेक्षया ।

अमावास्यां महाप्राज्ञो विप्रानानाय्य पूजितान् ।
[2]दक्षिणावृत्तिकाः सर्वा बृसीः स्वयमथाकरोत् ॥
दक्षिणाग्रास्ततो दर्भा विष्टरेषु निवेशिताः ।
पादयोश्चैव विप्राणां ये त्वन्नमुपभुञ्जते ॥

इति भारत(अनु, १३८, १२, १४)वचनात् । 'दक्षिणावृत्तिकाः' दक्षिणादिशिरस्काः ॥

याज्ञवल्क्यः [१,२२६–२२८]

अपराह्णे समभ्यर्च्य स्वागतेनागतांस्तु तान् ।
पवित्रपाणिराचन्तानासनेषूवेशयेत्[3] ॥

(1) 'दैविकपैतृकासनस्थापने प्रकारभेदो देवलस्मृतिकुर्मपुराणयोः—'ये चात्र विश्वेदेवानां' इत्यादि हेमाद्रौ, ११९१.

(2) 'दाक्षिणावर्तिका' इति कुम्भघोणकोशे । हेमाद्रिः, ११९२

(3) स्वशब्दात् स्वयमभ्युत्थानादिना अभ्यर्च्यैतान् । आगतवचनात् निमन्त्रणस्य अन्यकर्तृत्वेऽप्यदोषः । 'पवित्रं' दर्भास्तरणादि । आचान्तवचनाच्च न स्वयं पादप्रक्षालनक्रिया । स्वयमेव त्वासनेषु पङ्क्तिपावनाद्यपेक्षया यथार्हमुपवेशयेत् ॥ विश्वरूपः

[1]दैवे युग्मान् यथाशक्ति पित्र्येऽयुग्मांस्तथैव च ।
परिश्रिते शुचौ देशे दक्षिणाप्रवणे तथा ॥
द्वौ दैवे प्राक् त्रयः पित्र्य उदगेकैकमेव वा ।
मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम् ॥

'परिश्रिते' आवृते । 'प्राक्' प्राङ्मुखाः ।

विष्णुः [७३,२]

द्वितीयेऽह्नि शुक्लपक्षस्य पूर्वाह्णे कृष्णपक्षस्यापराह्णे विप्रान् सुस्नातानाचान्तान् यथाभूयो विद्याक्रमेण कुशोत्तरेष्वासनेषूपवेशयेत् ॥

'द्वितीयेऽह्नि' निमन्त्रणदिनापेक्षया । 'यथाभूयो विद्या' बहुविद्यमनतिक्रम्य क्रमेण दैवपूर्वम् ॥

शातातपः

द्वौ दैवेऽथर्वणौ विप्रौ प्राङ्मुखावुपवेशयेत् ।
पित्र्ये तूदङ्मुखान् त्रींश्च बह्वृचोऽध्वर्युसामगान् ॥

[2]मनुबौधायनौ शातातपश्च प्रथमे

द्वौ दैवे पितृकृत्ये त्रीनेकैकमुभयत्र वा ।
भोजयेत् सुसमृद्धोऽपि न प्रसज्येत विस्तरे ॥
सत्क्रियां देशकालौ च शौचं ब्राह्मणसंपदम् ।
पञ्चैतान् विस्तरो हन्ति तस्मान्नेहेत विस्तरम् ॥[3]

(1) 'युग्मान् दैवे' इति मुद्रितमिताक्षरापरार्कपाठः। 'दैवे युग्मान्' इति विश्वरूपामित्रमिश्रपाठः

(2) मनु, ३,१२५–१२६; बौधायन, २,१५,१०–११

(3) 'तस्मात्तं परिवर्जयेत्' इति बौधायनः ।

ब्रह्मपुराणे

देशकालधनाभावादेकैकमुभयत्र[1] वा ।
शेषान् वित्तानुसारेण भोजयेदन्यवेश्मनि ॥
यस्माद्ब्राह्मणबाहुल्याद्दोषो बहुतरो भवेत् ॥
श्राद्धनाशो मौननाशः श्राद्धतन्त्रस्य विस्मृतिः ॥
उच्छिष्टोच्छिष्टसंस्पर्शो निन्दा दात्रन्नभोक्तृषु ।
वितण्डया परीवादो जल्पास्ते ते पृथग्विधाः ॥

विष्णुपुराणे [३,१५, १७-१८]

प्राङ्मुखान् भोजयेद्विप्रान् देवानामुभयात्मकान्[2] ।
पितृमातामहानां च भोजयेच्चाप्युदङ्मुखान् ॥
पृथक् तयोः[3] केचिदाहुः श्राद्धस्य करणं बुधाः ।
एकत्रैकेन पाकेन वदन्त्यन्ये महर्षयः ॥

बौधायनः [२,१७,१२]

उरःस्थाः पितरस्तस्य वामपार्श्वे पितामहाः ।
प्रपितामहा दक्षिणतः पृष्ठतः पिण्डतर्ककाः ॥

[4]'उरःस्थाः' इत्याद्येकब्राह्मणपक्षे । 'पिण्डतर्ककाः' पिण्डलेपाभिलाषिणः ॥

गौतमः [१५,७-८]

नवावरान् भोजयेत् । अयुजो वा यथोत्साहं वा[5] ॥

(1) 'उभयत्र' दैवे पित्र्ये चेत्यर्थः (अपरार्कः, ४६४)

(2) 'उभयात्मकान्' पित्रादिमातामहादिश्राद्धद्वयार्थे वैश्वदेविकद्वयसम्बन्धिनः । (हेमाद्रिः, ११९८)

(3) 'तयोः' पितृमातामहवर्गयोः (हेमाद्रिः)

(4) उरस्थाः पितरस्तस्य वामतश्च पितामहाः ।
दाक्षिणतः प्रपितामहाः पृष्ठतः पिण्डतर्ककाः ॥
इति गोविन्दस्वामिपाठः । 'पिण्डतर्ककाः' पिण्डचिन्तकाः मातामहादयः ।

(5) सति सामर्थ्ये एवम् । असति तु अयुग्मान् 'यथोत्साहं' यथासामर्थ्यम् । (मस्करी)

आश्वलायनगृह्यम् [४,७,१-४]

अथातः पार्वणे श्राद्धे काम्य आभ्युदयिक एकोद्दिष्टे वा । ब्राह्मणान् श्रुतशीलवृत्तसम्पन्नानेकेन वा काले ज्ञापितान् स्नातान् कृतपच्छौचानाचान्तानुदङ्मुखान् पितृवदुपवेश्यैकैकस्य द्वौ द्वौ त्रींस्त्रीन् वा वृद्धौ फलभूयस्त्वं न त्वेवैकं सर्वेषाम् । काममनाद्ये । पिण्डैर्व्याख्यातम्[1] ॥

'एकेन' श्रुतादीनां समुदितानामसम्भव एषामन्यतमेनाऽपि संपन्नान् । 'कृतपच्छौचान्' कृतपादप्रक्षालनान् पूर्वं विश्वेभ्यो देवेभ्यो ब्राह्मणानुपवेश्य । 'पितृवत्' पित्रादिक्रमेण । 'द्वौ द्वौ' इत्याभ्युदयिकश्राद्धविषयम्, स्मृत्यन्तरेषु पार्वणादावयुग्मब्राह्मणनियमात् । अत्रैवोपक्रमे 'अथातः पार्वणे श्राद्धे काम्ये आभ्युदयिके' इत्यभिधानात् । 'पिण्डैर्व्याख्यातम्' इति, यथा बहूनां पितॄणां प्रतिपुरुषं पिण्डस्तथा ब्राह्मणोऽपि प्रतिपुरुषमिति । 'अनाद्ये' आद्यमत्र पार्वणधर्मकाणामादिभूतं सपिण्डीकरणश्राद्धम्, तद्व्यतिरिक्ते श्राद्धे

(1) 'अथशब्दोऽधिकारार्थः । अतःशब्दो हेतौ । वाशब्दः समुच्चये । प्रेतमेकमुद्दिश्य यद्दीयते तदेकोद्दिष्टम् । तस्य कालो याज्ञवल्क्येनोक्तः [१,२५६]

मृतेऽहनि तु कर्तव्यं प्रतिमासं तु वत्सरम् ।
प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि ॥ इति ।

'ब्राह्मणानिति' श्रुतादिसंपन्नयोः क्षत्रियवैश्ययोर्ग्रहणं मा भूत् । यदि श्रुतादयः सर्वे न लभ्यन्ते तेषामेकेनापि गुणेन संपन्नानिति । 'पितृवत्' पितृभिस्तुल्यान् मन्यमान उपवेशयेत् । अपर आह—पितृवदिति वयः परिगृह्यते, पितुर्वृद्धान् पितामहस्य वृद्धतरान् प्रपितामहस्य वृद्धतमानिति । 'आद्यं' सपण्डीकरणम् ॥ हरदत्ताचार्यः ॥ तद्वर्जितेषु सर्वश्राद्धेषु कामं त्रयाणामेकं भोजयेत । सपिण्डीकरणे नियमेन त्रयाणां त्रिभिर्भाव्यम् ॥ 'अनाद्ये' अभोजने आमहिरण्यश्राद्धादावित्यन्ये ॥ नारायणः

काम्ये एकः पितॄणां ब्राह्मण इति । 'अनाद्ये' अदनीयद्रव्याभावे एकोऽपि भोजनीय इति कश्चित् ॥

पैठीनसिः

श्वः श्राद्धं करिष्यामीति संकल्प्य ब्राह्मणान् सप्त पञ्च वा श्रोत्रियान् निमन्त्र्य शुचिः शुचौ देशे गवां गोष्ठेऽग्न्यगारे वा गोमयेन विलिप्य पुष्पोपहारं कृत्वा प्राङ्मुखान् विश्वेदेवानुपवेशयेत् । बर्हिष्मत्स्वासनेषु पितॄन् दक्षिणपूर्वेणेत्युक्तं[1] श्राद्धकल्पश्च ॥

बौधायनः [२,१४,६]

चरणवतोऽनूचानान् योनिगोत्रमन्त्रासंबन्धान् शुचीन् मन्त्रवतस्त्र्यवरानयुजः[2] पूर्वेद्युः प्रातरेव चामन्त्र्य सदर्भवत् कॢप्तेष्वासनेषु प्राङ्मुखानुपवेशयेदुदङ्मुखान् वा ॥

[3]'चरणवतः' स्वशाखायां व्यवस्थितान् । 'मन्त्रासंबन्धाः' शिष्योपाध्यायव्यतिरिक्ताः । 'मन्त्रवतः' मन्त्राध्ययनयुक्तानिति ॥

हारीतः [अ. १२]

कृतवेश्मकर्माणः सस्त्रीबालवृद्धाः सुरभिस्नाताः शुचयः शुचिवाससः[4] । शुचीनुपस्पृष्टाचमनीयान् शुचौ दक्षिणाग्रेषु दर्भेषु प्राङ्मुखान् ब्राह्मणान् भोजयेत्। उदङ्मुखानित्येके । न वा प्राङ्निर्देशात्क्रूरा ह्येतेऽभिमुखा हिंसका

(1) अथोपविष्टान् वैश्वदेविकानपेक्ष्य दाक्षिणपूर्वस्यामाग्नेय्यां दिशि निवेशितपङ्क्तीन् उत्तराभिमुखान् इत्येतत्सर्वं 'उक्तं' गृह्ये, इति शेषः ॥ हेमाद्रिः, ११९९

(2) 'त्र्यवरान् अयुषः' इति मूलमातृकायां त्रुटितम ।

(3) 'चरणम्' आचारः इति गोविन्दस्वामी ।

(4) हेमाद्रिः, ११६७—'सुरभिस्नाताः' सुगन्धितैलादिद्रव्यस्नाताः । एतच्च प्रायेणाभ्युदयिकविषयं भवितुमर्हति ॥

भवन्तीति मैत्रायणिः। तस्मात् प्राङ्मुखानेव [ब्राह्मणान्] भोजयेत्। उदङ्मुखान् वैश्वदेवे। ते हि दक्षिणां रक्षन्ति[1]॥

'शुचिवाससः' स्युरिति शेषः। 'न वा' न उदङ्मुखान् भोजयेत्। 'प्राङ्निर्देशात्' इति, पूर्वं यस्मादेते पितॄनुद्दिश्य निर्दिष्टास्तदर्थत्वेन कल्पितनिमन्त्रणादिना निमन्त्रणोत्तर-कालं च—"निमन्त्रितान् हि पितर उपतिष्ठन्ति तान् द्विजान्। वायुवच्चानुगच्छन्ति तथासीनानुपसते"॥ इति दृष्ट्या पित्र-धिष्ठानत्वात् 'एते क्रूराः'। अतो दक्षिणाभिमुखस्य यजमानस्य श्राद्धं कुर्वतोऽभिमुखा हिंसका भवन्ति। तस्मात् प्राङ्मुखान् स्वयं च दक्षिणाभिमुखो भोजयेत्। 'दक्षिणाः' दक्षिणा-दिगवस्थिताः। इदं च पित्र्यब्राह्मणनां प्राङ्मुखोपवेशनं मैत्रायणीयानां व्यवस्थितम्॥

वसिष्ठः [११,२९-३१]

अपि वा भोजयेदेकं ब्राह्मणं वेदपारगम्।
श्रुतशीलोपसंपन्नं सर्वालक्षणवर्जितम्॥
यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत्।
अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य तु॥

(1) हेमाद्रिः, ११९९—१२००; श्राद्धप्रकाशः १९०.

अत्र प्राधान्यात् दाक्षिणाग्रदर्भलिङ्गाच्च पित्र्यर्था एव ब्राह्मणा विवक्षिताः। एके तु मन्यन्ते तानुदङ्मुखान् भोजयेदिति। अथ वैतत पित्र्याणामुदङ्मुखत्वं न कर्तव्यम्। अत्र हेतुः प्राङ्निर्देशादित्यादिः। यत एते ब्राह्मणाः पूर्वनिमन्त्रणेन पित्र्यादिस्थाने भोक्तृत्वेन निर्दिष्टाः परिकल्पिताः। ततश्च "निमन्त्रितान् हि पितर उपतिष्ठन्ति तान् द्विजान्" इति वचनात्, क्रूरात्मकपित्राधिष्ठिताः सन्त उत्तराभिमुखाः सन्तः हिंसका भवन्तीति मैत्रायणिराचार्यो मन्यते। तस्मात्पूर्वाभिमुखानेव भोजयेत्। वैश्वदेविकांस्तूदङ्मुखान्, यतस्ते दाक्षिणादिगभिमुखस्य यजमानस्य कर्म कुर्वतः श्राद्धरक्षकविश्वेदेवाधिष्ठितत्वादभिमुखाः सन्तो रक्षका भवन्ति॥ इति.हेमाद्रिः, १२००

देवतायतने कृत्वा [1]तथा श्राद्धं प्रवर्तयेत्।
प्रास्येदन्नं तदग्नौ तु दद्याद्वा ब्रह्मचारिणे ॥
'अलक्षणानि' कुष्ठित्वादीनि।

शङ्खः

भोजयेदथवाप्येकं ब्राह्मणं पङ्क्तिपावनम्।
दिव्ये कृत्वा तु नैवेद्यं पश्चात्तस्य तु निर्वपेत् ॥
'दिव्ये' विश्वेदेवस्थाने। 'नैवेद्यं' देवार्थमुपकल्पितम्।

बृहस्पतिः [श्राद्ध, ८६,८८]

यद्येकं भोजयेच्छ्राद्धे स्वल्पत्वात् प्रकृतस्य तु ॥
स्तोकं स्तोकं समुद्धृत्य तेभ्योऽन्नं विनिवेदयेत्।

'प्रकृतं' श्राद्धोचितं द्रव्यम्। 'स्तोकं स्तोकं समुद्धृत्य' एकस्मिन्नेव पात्रे पित्र्यादिभ्यो विभज्यान्नं संकल्पयेदित्यर्थः।

हारीतः

[2]संतिष्ठमानेष्वर्हत्सु योऽनर्होऽग्रासनं श्रयेत्।
गृह्णाति सकलं पङ्क्तेरायुषा च वियुज्यते ॥
चतुर्णां दुष्कृतं हरति ब्राह्मणो विघ्नकारकः ॥
अन्नस्यान्नपतेः पङ्क्तेर्भोजनाकाङ्क्षिणां तथा ॥

[सुमन्तुः]

[3]विद्यातपोऽधिकानां वै प्रथमासनमुच्यते।

(1) 'यथाविधि प्रदर्शयेत्' इति मूलमातृका। 'ततः श्राद्धं प्रकल्पयेत्' इति विश्वरूपः।

(2) 'सन्तिष्ठमानेषु' विद्यमानेषु। 'मलं' दुष्कृतम् ॥ हेमाद्रिः, ११९५

(3) श्लोकार्धः सुमन्तोरिति हेमाद्रिः ११९४; "एकपङ्क्त्युपविष्टानां समं गन्धादिभोजनम्" इत्युत्तरार्धेन श्लोकः पूरितः। 'प्रथमं' प्रथमस्थाने स्थापितं गुणैश्च च श्रेष्ठम्। अन्यदन्येषां गन्धपुष्पादिकं भोज्यं चान्नं सर्वेषां 'समं' तुल्यं, नोत्कृष्टापकृष्टविभागेन विषमं देयम् ॥ इति व्याख्यातं च

यमः

प्रायेण मूर्खः श्रुतिमन्त्रहीनो
योऽग्रासनं गच्छति मूर्खभावात् ।
नान्यद्भयं पश्यति मूढचेता
देहप्रणाशे नरकं सुघोरम् ॥
यो वै विद्वान्न च ब्रह्मचारी
न चाश्रमस्थो न च मन्त्रपूतः ।
हवींषि चाश्नाति धुरि स्थितश्च
सोऽश्नति पङ्क्त्या मलकिल्बिषाणि[1] ॥

पङ्क्तिपावनानन्तरं पैठीनसिः[2]

तेषामेकैकः पुनाति पङ्क्तिनियुक्तो मूर्धनि सहस्रैरप्युपहताम्। तस्मान्नाऽनियुक्तोऽग्रासनं गच्छेत्। यदि गच्छेत् पङ्क्त्या हरति दुष्कृतम्[3] ॥

(1) हेमाद्रिः, ११९५–११९६; 'धुरि स्थितः' अग्रासने स्थितः ॥

(2) हेमाद्रिः, ११९६

(3) "सहस्रैरपि पङ्क्तिदूषकैः उपहतां पङ्क्तिं तेषां पूर्वोक्तानां पङ्क्तिपावनानां मध्ये एकैकोऽपि यजमाननियुक्तः सन् मूर्धन्याग्रिमासने समुपविष्टः पुनाति पावयति ॥ हेमाद्रिः, ११९६

## ॥ १३ ॥

## ॥ अथ श्राद्धसम्पदः ॥

[1]तत्र ब्राह्मणाः शास्त्रसंपद्धेतवो दर्शिताः 'अग्र्याः सर्वेषु वेदेषु' इत्यादियाज्ञवल्क्योक्तेः[2] । अन्यदप्याह—

मनुः [३,२५५-२५६]

> [3]अपराह्णस्तिला दर्भा वास्तुसंपादनं तथा ।
> सृष्टिर्मृष्टिर्द्विजाश्चाग्र्याः श्राद्धकर्मसु संपदः ॥
> दर्भाः पवित्रं पूर्वाह्णो हविष्याणि च सर्वशः ।
> पवित्रं यच्च पूर्वोक्तं विज्ञेया हव्यसंपदः ॥

[4]'वास्तु'रत्र श्राद्धदेशः, तस्य संपादनं 'वास्तुसंपादनम्' दक्षिणाप्रवणत्वसमीकरणोपलेपनादिकरणम् । 'सृष्टिः' विसर्गः, अकार्पण्येनान्नव्यञ्जनादिदानम् ।

(1) Folio 115—117 of the fragment of श्राद्धकल्पतरु, No. 5106 of the Collection of the Indian Museum, deposited with the Royal Asiatic Society of Bengal, begins here. The introductory prose Sentence is missing in the Udaipur manuscript. Its text is very corrupt.

(2) See *infra* pp. 118—119 for the two verses of Yājña-valkya (I. 219—22) alluded to here. They occur in the chapter on ब्राह्मणपरीक्षा. which begins on p. 111 *inf.* 'श्राद्धसंपदः' श्राद्धेष्वक्षय्यफलसंपत्तिहेतवः' इति मिताक्षरा (१,२२१)

(3) 'अपराह्णतिला' इति मूलमातृका ।

(4) A. S. B. MS. reads—वास्तुशब्देनात्र गृहमुच्यते । ..... 'सृष्टिः' सर्गः, दानमिति यावत् । तच्च श्राद्धग्रहणादेव सामान्यतः सिद्धम् । तस्यैवाकार्पण्यश्राद्धादिगुणविशिष्टसंपादनार्थं पुनर्ग्रहणम् । 'मृष्टिः' स्वाद्वन्नादिसंपादनम् । 'संपदः' समृद्धयः ।

'मृष्टिः,' अन्नादेः स्वादुत्वसंपादनम् । 'संपदः' समृद्धयः । 'पवित्रं' मन्त्राः । 'पवित्रं' पावनं, शुच्याचारतादि । 'पूर्वोक्तं' वास्तुसंपादनादि । 'हव्यं' अत्र दैविकं कर्म[1] ॥

देवलः

दर्भास्तिला गजच्छाया दौहित्रो मधुसर्पिषी ।
कुतपो [2]नीलकण्ठश्च पवित्राणीह पैतृके ॥

'नीलकण्ठो' नीलवृषः । सोऽत्र पितृकर्मप्रसङ्गादुक्तः ।

यमः

यत्नेन भोजयेच्छ्राद्धे दौहित्रं व्रतिनं शिशुम् ।
दत्त्वासनं तु कुतपं तिलैरभ्यवकीर्य च ॥

'शिशुं' बालमपि[3] ।

पैठीनसिः

तिला दौहित्रः कुतपा इति पवित्राणि श्राद्धे । सत्यं क्रोधं च शौचं चाचारं च प्रशंसन्तीति[4] ॥

विष्णुः [७९,१६]

[खड्ग]कुतपकृष्णाजिनतिलसिद्धार्थकाक्षतानि [च] पवित्राणि रक्षोघ्नानि च दद्यात् ॥

(1) 'अग्र्याः' श्रोत्रियत्वादिविशेषशालिनः । संपच्छन्दाच्च श्राद्धार्थिना सर्वाण्येतानि संपादनीयानीति सूचितम् ।

(2) 'नीलषण्डश्च' इति हेमाद्रिपाठः (११७४)

(3) A. S. B. adds the Comment—'व्रतिनम्' प्रथमाश्रमिणम् । 'शिशुं' अनधीतवेदमपि । विशेषणद्वयं दौहित्रस्तुतिपरम् । अन्यथा तस्य यूनो वृद्धस्य च निषेधप्रसक्तेः । 'कुतपः' अबृसी । बृसी च मूलदर्भसंयुक्तमानिषिद्ध-यज्ञवृक्षोद्भवमासनमित्यभिधानात् । हेमाद्रिः, ११७८

(4) हेमाद्रिः, ११७५

वायुपुराणे

कृष्णाजिनस्य सान्निध्यं दर्शनं दानमेव च ।
रक्षोघ्नं ब्रह्मवर्चस्यं पशून् पुत्रांश्च दापयेत् ॥[1]

हारीतः

दर्भैरद्भिस्तिलैर्दत्तं तूष्णीमप्याप्नुते दिवम् ।
विधिना त्वानुपूर्व्येण त्वक्षयं [2]परिकल्पते ॥
काञ्चनादिषु दर्भाद्यैर्मन्त्रवत्प्रतिपादिताः ।
पितॄणामक्षया यान्त्यमृता भूत्वा महोर्मिभिः ॥

'तूष्णीं'[3] श्राद्धमन्त्रविवर्जितम् । इयं च दर्भादीनां विध्यानुपूर्वीसहितानां स्तुतिः । 'काञ्चनादिषु' पात्रेष्विति शेषः । 'प्रतिपादिता' आपत्स्विति शेषः ।

[4]यमः

रक्षन्ति दर्भा असुरान् तिला रक्षन्ति राक्षसान् ।
वेदविद्रक्षति त्वन्नं यतये दत्तमक्षयम् ॥

हारीतः

तिला रक्षन्ति दैतेयान् दर्भा रक्षन्ति राक्षसान् ।
रक्षन्ति श्रोत्रियाः पङ्क्तिं [5]स्नातके दत्तमक्षयम् ॥

विष्णुः [१८,४]

तिलैः सर्षपैर्वा यातुधानान् विसर्जयेत्[6] ॥

(1) Udaipur ms. reads विष्णुः—[७९,२०]नाश्रु पातयेत् after this.
(2) 'कल्पयेत्'—A. S. B.
(3) 'तूष्णीमिति कैमुत्यन्यायेन'—A. S. B.
(4) हेमाद्रिः, ११७८
(5) 'सर्वं रक्षति चातिथिः' इति हेमाद्रिपाठः, ११७९
(6) 'परितो विकीर्णैरिति शेषः' इति हेमाद्रिव्याख्या, ११७८

[1]उशना

कुशा दर्भाः समाख्याताः कुतपो बृसयस्तथा ।
दुहितुश्चैव ये पुत्रा दौहित्रास्ते प्रकीर्तिताः ॥

'बृसी' आसनविशेषः, तृणमयं वर्तुलमासनम् ॥

[2]शातातपः

दौहित्रं खड्गश्रृङ्गं तु ललाटे यद्धि जायते ।
तस्य श्रृङ्गस्य यत्पात्रं दौहित्रमिति [3]तद्विदुः ॥
[4]दिवसस्याष्टमे भागे मन्दीभवति भास्करः ।
स कालः कुतपो नाम पितॄणां दत्तमक्षयम् ॥

पैठीनसिः

कुतोऽपि श्राद्धवेलायां श्रोत्रियो यदि दृश्यते[5] ।
श्राद्धं पुनाति वै यस्मात् कुतपस्तेन संज्ञितः ॥

अत्र च कुतपदौहित्रयोरनेकार्थत्वादेकतमोपादानेऽपि श्राद्धसमृद्धिर्भवतीति मन्तव्यम् ॥

ब्रह्मपुराणे

यतिस्त्रिदण्डी करुणा राजतं पात्रमेव च ।
दौहित्रः कुतपः कालश्छागः कृष्णाजिनं तथा ॥

(1) हेमाद्रिः, ११७८—कुशाख्या दर्भाः कुतपशब्दवाच्याश्च पदार्थाः,' बृसयः, दुहितुः पुत्रास्त्वेते 'दौहित्राः ।'

(2) 'वृद्धशातातपः' इति हेमाद्रिः, ११७७

(3) कीर्तितामिति हेमाद्रिपाठः

(4) शातातपवचनमिति हेमाद्रिः

(5) हेमाद्रिधृतस्कन्दपुराणवचनं यथा ३१९—
कुं यत्र गोपतिर्गोभिः कात्स्न्र्येन तपति क्षणे ।
स कालः कुतपो ज्ञेयस्तत्र दत्तं महाफलम् ॥

'कुः' पृथ्वी, तां, 'गोपतिः' सूर्यः, 'गोभिः' स्वकीयैः करैः, 'कात्स्न्र्येन' समग्रां, यास्मिन् क्षणे 'तपति' उष्णां करोति, स कालः कुतपो ज्ञेयः ।

गौराः कृष्णास्तथारण्यास्तथैव त्रिविधास्तिलाः ।
पितॄणां तृप्तये सृष्टा दशैते ब्रह्मणा स्वयम्[1] ॥
दर्भैर्मन्त्रैस्तिलैर्हेम्ना राजतेन विना जलम् ।
दत्तं हरन्ति रक्षांसि तस्माद्दद्यान्न केवलम्[2] ॥

मत्स्यपुराणे

तथा खाड्गं च तत्पात्रं यश्च नेपालकम्बलः ।
रुक्मं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः ॥
पापं कुत्सितमेवाहुस्तस्य संतापकारिणः ।
अष्टावेते यतस्तस्मात् कुतपा इति विश्रुताः ॥

(1) श्लोकौ ब्रह्माण्डपुराणादिति हेमाद्रिः, ११७४ । 'अत्र त्रिदण्डीति यतेर्विशेषणं, राजतमिति पात्रस्य, कुतप इति कालस्य । गौरास्तिलाः कृष्णास्तिलाः आरण्यास्तिला इति गुणानुरूपेण त्रयः पदार्थाः, एवञ्च दशसंख्या घटते । हेमाद्रिः

(2) दर्भादिभिः जलेन च विना दत्तं तद्रक्षांसि हरन्तीत्यर्थः । हेमाद्रिः, ११७९

॥ १४ ॥

## ॥ अथातिथ्यम् ॥

तत्र यमः

भिक्षुको ब्रह्मचारी च भोजनार्थमुपस्थितः ।
उपविष्टेष्वनुप्राप्तः कामं तमपि भोजयेत्[1] ॥
[2]यस्य वै यजमानस्य नाग्रे भुङ्क्ते यतिस्तथा ।
अनिष्टमहुतं तस्य हरते रक्षसां गणः ॥
प्रकृतेर्गुणतत्त्वज्ञो यस्याश्नाति यतिर्हविः ।
स तु वेदविदां तस्य सहस्रादतिरिच्यते ॥
तस्मादग्रासने भोज्यो यजता संशितो यतिः ।
श्रोत्रियो ब्रह्मचारी वा यज्ञस्तेन न लुप्यते ॥
सहस्रं तु सहस्राणां स्नातका यत्र भुञ्जते ।
एकस्तान् योगवित्प्रीतः सर्वानर्हति धर्मतः ॥

'अनुप्राप्तः' अतिथित्वेनेति शेषः । 'यजमानस्य' श्राद्धं कुर्वाणस्य । 'अनिष्टम्' इति, इष्टं हुतं च यस्माद्रक्षसां गणो हरति तस्मादनिष्टमहुतं भवतीत्यर्थः । 'प्रकृतेर्गुणतत्त्वज्ञः' प्रकृतिरत्र परमात्मा, 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इति [3]बादरायणसूत्रदर्शनात् । तस्य गुणाश्चिदानन्दादयः । तेषां तत्त्वं स्वरूपाव्यतिरेकः, तज्ज्ञ इत्यर्थः । 'अग्रासने' तस्यामेव पङ्क्तौ मूर्धनि । 'अर्हति' आत्मना स स्वीकरोति ॥

(1) हेमाद्रिः, ४३९
(2) हेमाद्रिः, ४१७—४१८
(3) ब्रह्मसूत्रम्, १, ४, २३.

छागलेयः

[1]पूजयेच्छ्राद्धकालेऽपि यतिं सब्रह्मचारिणम् ।
विप्रानुद्धरते पापात् पितृमातृगणानपि ॥
भुञ्जते यत्र तत्रापि यतयो ब्रह्मचारिणः ।
गृह्णन्ति पितरो देवाः स च याति परां गतिम् ॥
तारयन्ति च दातारं पुत्रान् दारान् पितॄंस्तथा ॥
तस्मात्सर्वप्रयत्नेन अर्चयेदाश्रमागतम् ॥
अलाभे ध्यानभिक्षूणां भोजयेद्ब्रह्मचारिणम् ।
तदलाभेऽप्युदासीनं गृहस्थमपि भोजयेत् ॥
ब्रह्मचारिसहस्रैस्तु वानप्रस्थशतैरपि ।
गृहस्थानां सहस्रैस्तु यतिरेको विशिष्यते[2] ॥
[3]गन्धमाल्यफलैश्चैव भोजनैः क्षीरसंस्कृतैः ।
[4]संपूजयेद्यतिं श्राद्धे पितॄणां तुष्टिकारिणम् ॥
ब्रह्मचारी तपस्वी च[5] पूजनीयौ हि नित्यशः ।
तत्कृतं सुकृतं यत्तु तस्मात् षड्भागमाप्नुयात् ॥
जाप्यं योगश्च यज्ञश्च यतस्तस्मै त्रयं स्मृतम् ।
तस्य प्रणामः पूजा च दत्तं भवति चाक्षयम् ॥
गृहस्थस्याश्रमं गच्छेद्ब्रह्मचारी यतिस्तथा ।
खाद्यं पानं फलं पुष्पमात्मानमपि वेदयेत्[6] ॥
सततं योगयुक्तानां वीतरागतपस्विनाम् ।
सर्वारम्भनिवृत्तानां यतीनां दत्तमक्षयम् ॥

(1) भोजयेदिति हेमाद्रिपाठः, ४२२
(2) हेमाद्रिः, ४२२
(3) हेमाद्रिः, ४१९
(4) 'संपूजयेत्' 'पूजयेच्च' इति पाठौ हेमाद्रिणा धृतौ ।
(5) 'यतिश्चैव'—हेमाद्रिः
(6) 'आत्मानं परिवेदयेत्' हेमाद्रिः, ४१९

यतये वीतरागाय दत्तमन्नं सुपूजितम् ।
न क्षीयते अद्ध्यापि कल्पकोटिशतैरपि ॥
ब्रह्मचारी यतिश्चैव पक्वान्नस्वामिनावुभौ ।
पचमानाः पतन्त्येते तापसः पतते पुनः[1] ॥
योगिनं समतिक्रम्य गृहस्थं यदि भोजयेत्[2] ॥
न तत्फलमवाप्नोति सर्वं गोत्रं प्रपातयेत् ॥
योगिनं समतिक्रम्य पूजयन्ति परस्परम् ।
दाता भोक्ता च नरकं गच्छते सह बान्धवैः ॥
अपरस्परदानानि लोकयात्रा न धर्मतः ।
तस्माद्यत्नेन दातव्यमन्यथा पतितो भवेत् ॥

'सब्रह्मचारिणं' ब्रह्मचारिसहितम् ॥ 'अलाभे' इति ध्यानभिक्ष्वादीनां सहागमनेऽपि पूर्वपूर्वोत्कृष्टज्ञापनार्थम् । 'तपस्वी' यतिः । 'वेदयेत्' निवेदयेत् । 'गोत्रं' कुलम् । 'प्रपातयेत्' अतिक्रान्तो यतिरिति शेषः। 'अपरस्परदानानि' परस्परदानानि न कर्तव्यानि । यतः 'सा लोकयात्रा न धर्मतः', नञ्समासश्चात्राश्राद्धभोजीतिवत् प्रसज्य प्रतिषेधे। 'धर्मतः' इति प्रथमान्तात्तसिः । 'अन्यथा' परस्परदानेन ॥

मनुः [३,२८३]

ब्राह्मणं भिक्षुकं चापि भोजनार्थमुपस्थितम् ।
ब्राह्मणैरभ्यनुज्ञातः शक्तितः प्रतिपूजयेत्[3] ॥

(1) हेमाद्रिः, ४२२

(2) श्राद्धप्रकाशः, ७३

(3) अतिथित्वेनागतं ब्राह्मणं 'भिक्षुकं' भिक्षार्थिनमब्राह्मणमपि भोजनप्रवृत्तैर्ब्राह्मणैरनुज्ञातः शक्त्या पूजयेत् । मेधातिथिः ॥ 'ब्राह्मणं' गृहिणम् । 'भिक्षुकं' यतिं व्रतिनं वा । नारायणः

शातातपः

अतिथिर्यस्य नाश्नाति तच्छ्राद्धं न प्रशस्यते ।
श्रुतव्रतविहीनैश्च भुक्तमश्रोत्रियैश्च यत् ॥

शातातपग्रन्थान्तरे

आतिथ्यरहिते श्राद्धे भुञ्जते येऽबुधा द्विजाः ।
वृथा तेनान्नपाकेन काकयोनिं व्रजन्ति ते ॥

॥ १५ ॥

## ॥ अथापासनीयाः ॥

[1]तत्र मनुः[३,२३९-२४१]

चाण्डालश्च वराहश्च [1]कुक्कुटश्च तथैव च ।
रजस्वला च षण्डश्च नेक्षेरन्नश्नतो द्विजान् ॥
होमे प्रदाने भोज्ये च यदेभिरभिवीक्षितम्[2] ।
दैवे कर्मणि पित्र्ये च [3]तद्भवत्ययथातथम् ॥
घ्राणेन सूकरो हन्ति पक्षवातेन कुक्कुटः ॥
श्वा तु दृष्टिनिपातेन स्पर्शेनावरवर्णजः ॥

'अयथातथं' यदर्थं क्रियते तद्विपरीतम् । 'कुक्कुटः पक्षवातेन' इत्यादि सन्निधिविशेषणं वारणपरम्, यावति देशे कुक्कुटादीनां पक्षवातादि संभाव्यते तावतो देशादपनेया इत्यर्थः । 'अवरवर्णजः' शूद्रः[4] ॥

[5]यमः

कुक्कुटो विड्वराहश्च काकः श्वा च बिडालकः ।
वृषलीपतिश्च वृषलः षण्डो नारी रजस्वला ।
एतानि श्राद्धकालेषु परिवर्ज्यानि नित्यशः ।
कुक्कुटः पक्षवातेन हन्ति श्राद्धमसंवृतम् ॥

(1) 'कुक्कुटः श्वा तथैव च' इति मेधातिथिपाठः
(2) 'यदेभिरभिवीक्ष्यते' इति मेधातिथिपाठः
(3) 'अयथातथं' यदर्थं क्रियते तद्विपरीतं भवतीत्यर्थः । मेधातिथिः
(4) 'अवरवर्णजः' चाण्डालः प्रकृतत्वात् । मेधातिथिः; शूद्रः इति सर्वज्ञनारायणः; शूद्राजातः इति कुल्लूकः ॥
(5) हेमाद्रिः, ५१६-५१७

घ्राणेन विड्वराहश्च वायसस्तु रुतेन तु ।
श्वा तु दृष्टिनिपातेन मार्जारः श्रवणेन तु[1] ॥
वृषलीपतिश्च दानेन[2] चक्षुर्भ्यां वृषलस्तथा ।
छायया हन्ति वै षण्डः स्पर्शेन च रजस्वला ॥
खञ्जः काणः कुणिः श्वित्री दातुः प्रेष्यकरो भवेत् ।
न्यूनाङ्गश्चातिरिक्ताङ्गस्तमाशु निनयेत्ततः ॥

देवलः

हीनाङ्गः पतितः कुष्ठी व्रणी पुल्कसनास्तिकौ ।
कुक्कुटः शूकरश्वानौ वर्ज्या श्राद्धेषु दूरतः ॥
बीभत्समशुचिं नग्नं मत्तं धूर्तं रजस्वलाम् ।
नीलकाषायवसनं छिन्नकर्णं च वर्जयेत् ॥
शस्त्रं कालायसं सीसं मलिनाम्बरवाससम् ।
अन्नं पर्युषितं वापि श्राद्धेषु परिवर्जयेत् ॥

'बीभत्सः' विकृतो उद्वेगकरः पदार्थः । मलिन-मम्बरं वस्त्र इति 'मलिनाम्बरवासाः' ॥

महाभारते

रजस्वला च या नारी व्यञ्जिता कर्णयोस्तथा ।
निर्वापे नोपतिष्ठेत संग्राह्या नान्यवंशजा ॥

'निर्वापे' पाकारम्भप्रभृतिश्राद्धकर्मणि । 'अन्यवंशजा' मातापितृवंशासंबद्धा । 'न संग्राह्या' न व्यापारयितव्येत्यर्थः ॥

(1) हेमाद्रिः, ५१७–५१८—'श्रवणेन' शब्दश्रवणेन ।
(2) 'दानेन' पात्रीकृतः सन्नित्यर्थः । हेमाद्रिः, ४१८

विष्णुः [८१,९–१०]

संवृते न श्राद्धं कुर्यात्। न रजस्वलां [पश्येत् ।] न श्वानम्। न विड्वराहम्। न ग्रामकुक्कुटम्। प्रयत्नाच्छ्राद्धमजस्य दर्शयेत्[1] ॥

पुनर्विष्णुः [८१,१५–१७]

न हीनाधिकाङ्गाश्च श्राद्धं पश्येयुः । न शूद्राः । न पतिताः। न महारोगिणः[2] ॥

उशना

विड्वराहमार्जारकुक्कुटनकुलशूद्ररजस्वलाशूद्रीभर्तारश्च दूरमपनेतव्याः[3] ॥

बृहस्पतिः [श्राद्धकाण्ड, ४८,५०]

श्वपाकषण्डपिशुनाः [4]श्वानकुक्कुटसूकराः ।
[5]रजस्वला च चाण्डालाः श्राद्धे कार्यास्त्वदर्शनाः ॥
परिश्रितेषु दद्याच्च तिलैर्वा विकिरेन्महीम् ।
निनयेचोपविष्टस्तु तं दोषं पङ्क्तिपावनः ॥
'श्वपाकः' अन्त्यजातिविशेषः[6]।

(1) 'श्राद्धं' श्राद्धार्थान् पदार्थान्। 'अजः' कृष्णच्छागः। तद्दर्शनेन हि दुष्टदृष्टिदूषिताः पदार्थाः पूता भवन्तीति कृत्वा तस्य प्रयत्नेन दर्शयेत्॥ हेमाद्रिः,५११

(2) अन्तिमसूत्रः मुद्रितविष्णुस्मृतौ नास्ति। हेमाद्रौ ५१६ उपलभ्यते।

(3) 'अपनेतव्याः' श्राद्धप्रदेशादिति शेषः। 'शूद्रीभर्ता', अविद्यमानसजातीयभार्यो ब्राह्मणादिरित्यर्थः। हेमाद्रिः, ५१६

(4) 'पतितश्वान' इति हेमाद्रिः, ५११

(5) उत्तरार्धमेवं हेमाद्रिणा पठितम्—"रजस्वलायाश्चण्डालात् श्राद्धे कुर्याच्च रक्षणम्।"

(6) 'रक्षणं कुर्यात्' इति—यथा श्वपाकदृष्ट्युपपातो न स्यात् तथा कुर्यादित्यर्थः। 'परिश्रितेषु' परिवृतेषु। महीमित्युपलक्षणं, यावन्तः पदार्थाः श्वपाकादिभिः दृष्टाः तावन्तः कृष्णतिलैरवकीर्णाः। पङ्क्तिपावनो वा दोषं 'निनयेत्' अपहरेत्॥ हेमाद्रिः, ५११

हारीतः

दैवे वा यदि वा पित्र्ये सुरापी यत्तु संस्पृशेत्।
रजस्वला पुंश्चली वा रक्षः संगच्छते हि तत्[1] ॥

वायुपुराणे

नग्नादयो न पश्येयुः श्राद्धमेवं व्यवस्थितम्।
गच्छन्ति तैस्तु दृष्टानि न पितॄन्न पितामहान् ॥
सर्वेषामेव भूतानां त्रयी संवरणं स्मृतम्[2]।
तां त्यजन्ति तु ये मोहात् ते वै नग्नादयो जनाः ॥
बौद्धश्रावणनिर्ग्रन्थाः शाक्यजीवककापिलाः।
येऽधर्माननुवर्तन्ते ते वै नग्नादयो जनाः ॥
वृथाजटी वृथामुण्डी वृथानग्नश्च यो नरः।
महापातकिनो ये च ते वै नग्नादयो जनाः[3] ॥
कुलत्वमानिनः शावा व्याधा मुष्टिकलङ्घनाः।
कुकर्मसंश्रितास्त्वेते कुपथाः परिकीर्तिताः ॥
एभिर्निर्धूलितं दृष्टं श्राद्धं गच्छति दानवान्।
देवतानामृषीणां च पापवादरताश्च ये ॥
असुरान् यातुधानांश्च दृष्टमेतैर्व्रजत्युत।
अपुमानपविद्धश्च कुक्कुटी ग्रामसूकरः ॥

(1) दैवे वा यदि वा पित्र्ये सुराप्यायतनं स्पृशेत्।
रजस्वला पुंश्चली च निवापे समुपस्थिते ॥

'निवापः' पितृकर्म । 'समुपस्थित'शब्दात् पाकोपक्रमात् प्रभृतीति विज्ञेयम् ॥ हेमाद्रिः, ५१८

(2) ब्रह्मपुराणादिति श्राद्धप्रकाश', १५१; ब्रह्माण्डपुराणादिति हेमाद्रिणा आद्यश्लोकत्रयं सूचितम्, ५१९–५२०; 'नग्नाः' वेदपरित्यागिनः । 'त्रयी' वेदः, 'संवरणं' प्रावरणं, यथा प्रावरणं पुरुषान् त्रायते एवं त्रय्यपि दुःखेभ्यः त्रायत इति प्रावरणसादृश्यम् ॥ हेमाद्रिः, ५२०

(3) एष वायुपुराणश्लोक इति हेमाद्रि-मित्रमिश्रादयः।

श्वा चैव हन्ति श्राद्धानि दर्शनादेव सर्वशः ।
श्वाविड्सूकरसंमृष्टं दीर्घरोगिभिरेव च ॥
पतितैर्मलिनैश्चैव न द्रष्टव्यं कथंचन ।
अन्नं पश्येयुरेते यत्तन्न स्याद्धव्यकव्ययोः ॥
उत्स्रष्टव्यं प्रधानार्थं संस्कारस्त्वापदि स्मृतः ।
हविषा संस्कृतानां तु पूर्वमेव हि मार्जनम् ॥
मृत्संयुक्ताभिरद्भिस्तु प्रोक्षणं तु विधीयते ।
सिद्धार्थकैः कृष्णतिलैः कार्यं चैवावकीरणम् ॥
गुरुसूर्याग्निबस्तानां दर्शनं वा प्रयत्नतः ।

'बौद्धश्रावणकादयः' पाखण्डविशेषाः । 'कुलत्वमानिनः' ये कुलाभिमानेन त्यक्ताचाराः । 'शावाः' मृतहारिणः । 'मुष्टिकः' मल्लः । 'प्रधानार्थं' श्राद्धार्थम् । 'उत्स्रष्टव्यं' श्राद्धे तन्न नियोज्यम् । असंभवे तु मृत्संयुक्ताभिरद्भिर्मार्जनादिच्छागदर्शनपर्यन्तसंस्कारं कृत्वा विनियोज्यमिति समुदायार्थः ॥

## ॥ १६ ॥

## ॥ अथ विधिपरिभाषा ॥

तत्र शातातपः

नित्यश्राद्धमदैवं स्यादेकोद्दिष्टं तथैव च ॥
मातृश्राद्धं तु युग्मैः स्याददैवं प्राङ्मुखैः पृथक् ॥
योजयेद्दैवपूर्वाणि श्राद्धान्यन्यानि यत्नतः ।

तथा

सदैवं भोजयेच्छ्राद्धं तत्पूर्वं च प्रवर्तयेत् ।
अन्यथा त्ववलुम्पन्ति सदैवासुरराक्षसाः ॥

'तत्पूर्वं' दैवपूवम् ॥

वायुपुराणे

नाऽप्रोक्षितं स्पृशेत् किंचिच्छ्राद्धे दैवे तथा पुनः ।
उत्तरेण हरेद्वेद्या दक्षिणेन विसर्जयेत् ॥

'वेदिः' अत्र दक्षिणाप्रवणादिश्राद्धदेशः । 'दैवे' देवश्राद्धे ।

मनुः [३,२०३-२०५]

[1]देवकार्याद्द्विजातीनां पितृकार्यं विशिष्यते ।
दैवं हि पितृकार्यस्य पूर्वमाप्यायनं [2]स्मृतम् ॥
तेषामारक्षभूतं तु पूर्वं दैवं नियोजयेत् ।

(1) दैवकार्यादिति मेधातिथिपाठः

(2) 'श्रुतम्' इति कुल्लूकपाठः

रक्षांसि हि विलुम्पन्ति[1] श्राद्धमारक्षवर्जितम् ॥
दैवाद्यन्तं तदीहेत पित्राद्यन्तं न तद्भवेत् ।
पित्र्याद्यन्तं त्वीहमानः क्षिप्रं नश्यति सान्वयः ॥

'आप्यायनं' पितृश्राद्धस्य प्रधानीभूतस्य समृद्धिकरमङ्गभूतं न तु स्वतः प्रधानम् । 'आरक्षभूतं' सर्वतो रक्षाकरम् । 'दैवाद्यन्तं' देवताद्यारम्भावसाने यस्य तत्तथा । एतेनैतदुक्तं भवति—निमन्त्रणानि दैवपूर्वं, विसर्जनं तु विपरीतं कर्तव्यम्[2] ॥

देवलः

यत्र तु क्रियते कर्म पैतृके ब्राह्मणान् प्रति ।
तत्सर्वं तस्य कर्तव्यं वैश्वदैवत्यपूर्वकम् ॥

बृहस्पतिः [श्राद्धकाण्ड, ९१-९४]

क्रतुर्दक्षो वसुः सत्यः कालः कामस्तथैव च ।
धुरिश्च रोचनश्चैव तथा चैव पुरूरवाः ॥
मार्द्रवश्च दशैते तु विश्वेदेवाः प्रकीर्तिताः ।
इष्टिश्राद्धे क्रतुर्दक्षः सत्यो नान्दीमुखे वसुः ॥
नैमित्तिके कालकामौ काम्ये च धुरिरोचनौ ।
पुरूरवा मार्द्रवश्च पार्वणे समुदाहृतौ[3] ॥
उत्पत्तिं नाम चैतेषां न विदुर्ये द्विजातयः ।
अयमुच्चारणीयस्तैः श्लोकः श्रद्धासमन्वितैः ॥
आगच्छन्तु महाभागा विश्वेदेवा वरप्रदाः ।
ये यत्र योजिताः श्राद्धे सावधाना भवन्तु ते ॥

(1) 'रक्षांसि विप्रलुम्पन्ति' इति मेधातिथिपाठः

(2) 'दैवाद्यन्तं' दैवेन कर्मणा आदिरुपक्रमः श्राद्धस्य कर्तव्यः । अतश्च निमन्त्रणं देवानां पूर्वं कर्तव्यमतः समाप्तिः । विसर्जितेषु ब्राह्मणेषु पश्चाद्दैवानां विसर्जनं कर्तव्यम् ॥ मेधातिथिः ।

(3) हेमाद्रिः, १४३; 'क्रतुर्दक्षः'; 'पुरूरवार्द्रवौ' इति । ऋतुर्दक्षः—उ.

'इष्टिश्राद्धम्' इच्छाश्राद्धम्। 'नैमित्तिकं' सांवत्सरिकम्। एकोद्दिष्टं तद्यस्य साग्न्यादेः पार्वणवत् क्रियते। 'यत्र' विश्वेदेवानां संभवात् ॥

शातातपः

उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः।
प्रदद्यात्पार्वणे श्राद्धे दैवपूर्वं विधानतः ॥

श्राद्धकल्पे कात्यायनः [१,१,२४-२५;१,२,१-५]

आवाहनादि वाग्यत उपस्पर्शनात्। आमन्त्रिताश्चैवम्। दैवपूर्वं हि श्राद्धम्। पिण्डपितृयज्ञवदुपचारः पित्र्ये। द्विगुणास्तु दर्भाः। पवित्रपाणिर्दद्यादासीनः सर्वत्र। प्रश्नेषु पङ्क्तिमूर्धन्यं पृच्छति ॥

'सर्वान् वा पित्र्य' इति वचनात् तर्पणाद्यपि पित्र्ये द्विगुणैः कुशैः समाचरन्ति, न ऋजुभिरेव ॥

मनुः [३,२८९]

प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा ॥
पित्र्यमानिधनात् कार्यं विधिवद्दर्भपाणिना ॥

'अपसव्यं' वामपार्श्वे। 'अतन्द्रिणा' अनलसेन। 'आनिधनात्' आसमाप्तेः[1] ॥

छन्दोगपरिशिष्टे कात्यायनः [१,२३]

दक्षिणं पातयेज्जानु देवान्परिचरन् सदा।
पातयेदितरं जानु पितॄन् परिचरन् सदा ॥

[इति] श्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ विधिपरिभाषा[पर्व] ॥

(1) 'आ निधानात्' आ मरणात्। यावज्जीविकेयं विधिरित्यर्थः। मेधातिथिः

## ॥ १७ ॥

## ॥ अथ जपासनादिविधिः ॥

अथ जपासनदानावाहानार्घ्यपाद्यकरणानि ।

तत्र ब्रह्मपुराणे

उपविश्य जपेद्धीमान् गायत्रीं तदनुज्ञया ।

तथा

पापापहं पावनीयमश्वमेधफलं तथा ।
मन्त्रं वक्ष्याम्यहं तस्मादमृतं ब्रह्मनिर्मितम् ॥
देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वधायै स्वाहायै नित्यमेव भवन्त्विति ॥
आद्यावसाने श्राद्धस्य त्रिरावृत्तं भवेत्सदा ।
अश्वमेधफलं ह्येतद्द्विजैः सत्कृत्य पूजितः ॥
पिण्डनिर्वापणे वाऽपि जपेदेतत्समाहितः ।
पठ्यमानमिदं श्रुत्वा श्राद्धकाले ह्युपस्थिते ॥
पितरः क्षिप्रमायान्ति राक्षसाः प्रद्रवन्ति च ।

मत्स्यपुराणे

विश्वान्देवान् यवैः पुष्पैरभ्यर्च्यासनपूर्वकम् ।
पूरयेत्पात्रयुग्मं तु स्थाप्य दर्भपवित्रके ॥

याज्ञवल्क्यः [१,२२९–२३५]

पाणिप्रक्षालनं दत्वा [1]विष्टरार्थं कुशानपि ।
आवाहयेदनुज्ञातो विश्वेदेवास इत्यृचा ॥

(1) 'विष्टरार्थं' आसनार्थम् ।

यवैरन्ववकीर्याथ भाजने सपवित्रके ।
शन्नो देव्या अपः[1] क्षिप्त्वा यवोऽसीति यवांस्तथा ॥
या दिव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत् ।
दत्त्वोदकं [2]गन्धधूपमाल्यदानं सदीपकम् ॥
[तथाच्छादनदानं च करशौचार्थमम्बु च[3]] ।
अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम् ॥
द्विगुणांस्तु कुशान् कृत्वा [4]उशन्तस्त्वेत्यृचा पितॄन् ।
आवाह्य तदनुज्ञातो जपेदायन्तु नस्ततः ॥
[अपहता इति तिलान्विकीर्य च समन्ततः[5] ।]
यवार्थास्तु तिलैः कार्याः कुर्यादर्घ्यादि पूर्ववत् ॥
दत्त्वार्घ्यं संस्रवांस्तेषां पात्रे कृत्वा विधानतः ।
पितृभ्यः स्थानमसीति [6]न्युब्जं पात्रं करोत्यधः ॥

'पाणिप्रक्षालनं' प्रक्षाल्यतेऽनेनेति प्रक्षालनमुदकम् । 'विष्टरार्थम्' आसनार्थम् । 'अनुज्ञातः' अनुमतः । अनुज्ञातवचनादेव 'विश्वान् देवानावाहयिष्ये' इत्यादिप्रश्नोऽर्थात् पूर्वं वेदितव्यः । 'यवैरन्ववकीर्य' आवाहनानन्तरमासनार्थं यवविकिरणं कृत्वा । 'यवोऽसीति' 'यवोऽसि धान्यराजो वा' इत्यादिना । 'आयन्तु न' इति, 'आयं तु नः पितर' इत्यादिमन्त्रः । 'यवार्थाः' यवप्रयोजनानि विकिरणादीनि ।

(1) 'पय ' इति विश्वरूपविज्ञानेश्वराद्दतपाठः

(2) 'गन्धधूपमाल्यधाम सदीपकं' इति विश्वरूपपाठः । 'गन्धमाल्यं धूपदानं सदीपकं' इति मिताक्षरा ॥

(3) Missing in *Kalpataru* and Viśvarūpa's text but found in the *Mitākṣarā* text.

(4) 'उशन्तस्त्वेत्यृचा' इति विश्वरूपपाठः । 'ह्युशन्त' इति मिताक्षरा ।

(5) Missing in *Kalpataru* and *Viśvarūpa's* but supplied by the *Mitākṣarā*.

(6) यवमिति मूलमातृकापाठः । व्याख्याने न्युब्जमिति शुद्ध-पाठोऽस्ति ।

'संस्रवाः' अर्घ्ये दीयमाने संस्रवन्तः उदकबिन्दवः। 'तेषां' अर्घ्याणाम्। 'न्युब्जं' अधोमुखम्। 'अधः' भूमौ॥

मत्स्यपुराणे[1]

> या दिव्येत्यर्घ्यमुत्सृज्य दद्याद्गन्धादिकं ततः।
> वस्त्रोत्तरं चानुपूर्वं दत्त्वा संस्रवणादि च॥
> पितृपात्रं निधायाथ न्युब्जमुत्तरतो न्यसेत्॥

'वस्त्रोत्तरं' वस्त्रदानमुत्तरमन्त्यं यत्र गन्धादिदाने तत्तथा। 'अनुपूर्वं' अनुक्रमेण। 'संस्रवणं' संस्रवोदकम्॥ आदिशब्देन तिलपुष्पपवित्राणां ग्रहणम्। 'उत्तरतः' उपविष्टब्राह्मणादुत्तरस्यां दिशि॥

श्राद्धकल्पे कात्यायनः [२,५-१४]

आसनेषु दर्भानास्तीर्य विश्वान् देवानावाहयिष्य इति पृच्छति। आवाहयेत्यनुज्ञातो विश्वेदेवास आगतेत्यनयाऽऽवाह्यावकीर्य विश्वेदेवाः शृणुतेममिति जपित्वा पितॄनावाहयिष्य इति पृच्छति। आवाहयेत्यनुज्ञात उशन्तस्त्वेत्यनयर्चा[2]ऽऽवाह्यावकीर्याऽऽयन्तु न इति जपित्वा यज्ञियवृक्षचमसेषु पवित्रान्तर्हितेष्वेकैकस्मिन्नप आसिञ्चति शन्नो देवीरिति। एकैकस्मिन्नेव तिलानावपति 'तिलोऽसि पितृदैवत्यो गोसवो देवनिर्मितः। प्रत्नमद्भिः पृक्तः स्वधया पितॄंल्लोकान् प्रीणाहि नः स्वाहे'ति।

(1) पाद्ममात्स्ययोरप्युक्तमिति हेमाद्रिः, १३०१; अस्यार्थः—'या दिव्या' इत्यनेन मन्त्रेण अर्घ्यं 'उत्सृज्य' दत्त्वा, तदनन्तरं 'आदितः' प्रथमं, पितृपात्रे संस्रवान् पितामहार्घ्यपात्रस्थितान् जलशेषान् निधाय तत्पात्रं 'पितृभ्यः स्थानमसी'त्यनेन मन्त्रेण भोक्तृद्विजपङ्क्तेरुत्तरतो न्युब्जं 'न्यसेत्' निदधीत। निधाय च 'गन्धादिकं' गन्धपुष्पधूपदीपं, 'वस्त्रोत्तरं' वस्त्रमुत्तरं यस्य यस्य दीयते तदनुपूर्वक्रमेण दत्त्वाग्नौकरणञ्च कृत्वा परिवेषयेदिति॥ हेमाद्रिः, १३०१–१३०२

(2) 'ऋचा' मुद्रितश्राद्धकल्पसूत्रे, पृ. ७४५ नास्ति।

सौवर्णराजतौदुम्बरखड्गमणिमयानां पात्राणामन्यतमेषु पात्रेषु यानि वा विद्यन्ते। पत्रपुटेषु वा। एकैकस्यैकैकेन ददाति सपवित्रेषु हस्तेषु "या दिव्या आपः पयसा संबभूवुर्या अन्तरिक्ष उत पार्थिवीर्याः। हिरण्यवर्णा यज्ञियास्ता न आपः शिवाः शंस्योनाः सुहवा भवन्त्वित्यसावेषतेऽर्घ" इति। प्रथमपात्रे संस्रवान् समवनीय पितृभ्यः स्थानमसीति न्युब्जं पात्रं निदधाति। अत्र गन्धपुष्पधूपदीपानां[1] प्रदानम्॥

'असा'विति सबोधनान्तं पित्रादिनामोपलक्षणम्। 'अत्र' एतस्मिन् काले।

आश्वलायनगृह्यम् [४,७,५-१४][2]

अपः प्रदाय। दर्भान् द्विगुणभुग्नानासनं प्रदाय। अपः प्रदाय। तैजसाश्ममयमृन्मयेषु त्रिषु पात्रेष्वेकद्रव्येषु वा दर्भान्तर्हितेष्वप आसिच्य 'शन्नो देवीरभिष्टय' इत्यनुमन्त्रितासु तिलानावपति "तिलोऽसि सोमदेवत्यो गोसवे देवनिर्मितः। प्रत्नवद्भिः प्रत्तः स्वधया पितॄनिमांल्लोकान् प्रीणयाहि नः स्वधा नम" इति। प्रसव्येन। इतरपाण्यङ्गुष्ठान्तरेणोपवीतित्वाद्दक्षिणेन वा सव्योपगृहीतेन पितरिदं ते अर्घ्यं पितामहेदं ते अर्घ्यमिति। अप्पूर्वम्।

(1) 'दीपवाससां' इति मुद्रितश्राद्धकल्पसूत्रे, पृ. ७५२

(2) Chapter and sūtra divisions differ in different recensions of *Āśvalāyana Gṛhyasūtra*. The figures given in brackets follow that of Nārayāṇa (ed. Ānandāśrama, 1937, pp. 125—127). In Haradattācārya's recension (Trivandrum Sanskrit Series, 1923) the ten sūtras are counted as five. The concluding verse is wanting in some manuscripts of *Nārāyaṇavṛtti*, while others give it thus: उद्धरेद्यदि चेत्पात्रं विवृतं वा यदा भवेत्। तदाऽऽसुरं भवेच्छ्राद्धं क्रुद्धैः पितृगणैर्गतैः॥ in the edition followed by H. Oldenberg (S.B.E., XXIX, 1886) the above sūtras are as IV, 7, 7-16.

ताः प्रतिग्राहयिष्यन् सकृत् सकृत्[1] स्वधा अर्घ्या इति। [2]प्रसृष्टास्वनुमन्त्रयेत "या दिव्या आपः पृथिवी संबभूवुर्या अन्तरिक्ष्या उत पार्थिवीर्याः। हिरण्यवर्णा यज्ञियास्ता न आपः शंस्योना भवन्त्वि"ति संस्रवान्[3] समवनीय ताभिरद्भिः पुत्रकामो मुखमनक्ति।

नोद्धरेत्प्रथमं पात्रं पितॄणामर्घ्यपातितम्।
आवृतास्तत्र तिष्ठन्ति पितरः शौनकोऽब्रवीत्॥
उद्धरेद्यदि तत्पात्रं ब्राह्मणो ज्ञानदुर्बलः।
अभोज्यं तद्भवेच्छ्राद्धं क्रुद्धैः पितृगणैर्गतैः॥

एतस्मिन् काले गन्धमाल्यधूपदीपाच्छादनानां प्रदानम्॥

'दर्भान् आसनं प्रदाय' दर्भानासनत्वेन प्रदाय इत्यर्थः। 'तैजसाश्ममयमृन्मयेषु[4]' यथाक्रमं पित्रादीनां द्रव्यत्रयनिर्मितेषु। 'एकद्रव्येषु' द्रव्यत्रयाऽसंभवे मृदाद्येकजातीयद्रव्यमयेषु। 'प्रसव्येन' वामेन हस्तेन। तत्रापि न केवलेन वामेनैव, अपि तु 'इतरपाण्यङ्गुष्ठान्तरेण', इतरस्य दक्षिणस्य पाणेः अङ्गुष्ठान्तरेण पितृतीर्थेन। तेनैतदुक्तं भवति-वामहस्तेन अर्घ्यपात्रं धृत्वा, दक्षिणहस्तेन पितृतीर्थं संस्पृश्य, यथा ब्राह्मणहस्तेषु जलं पतति तथा देयमिति।

(1) सकृन्निवेदयेदिति हरदत्तः

(2) 'प्रसृष्टा' इति नारायणः; 'प्रसृष्टासु' इति हरदत्तः।

(3) 'संस्रवा' अर्घ्यदानावशिष्टा आपः। हरदत्तः

(4) 'तैजसं' सुवर्णरजतताम्रादिकांस्यमयम्। 'अश्ममयं' माणिक्यमरकत-स्फटिकादिमयम्। 'मृन्मयं' मृत्तिकाप्रक्लृप्तकम्। पित्रादीनां त्रयाणां यथाक्रममेकैकस्य तैजसादिजातीयमेकैकपात्रमित्येवं भिन्नजातीयद्रव्यनिर्मितेषु पात्रेषु त्रयाणामपि वा पितॄणां तैजसादिजातीयद्रव्यनिर्मितेषु वा त्रिषु॥ हेमाद्रिः, १२७९—१२८०

ततो वामेन हस्तेन गृहीत्वा चमसान् क्रमात् ।
पितृतीर्थेन तत्तोयं दक्षिणेन च पाणिना ॥

इति ब्रह्मपुराणवचनात्[1] । अत्रैव हेतुः 'उपवीतत्वाद्'इति । यथा दक्षिणहस्तेन कर्म कुर्वन् वामस्कन्धस्थितेन यज्ञोपवीतेनोपवीती भवति तथा वामहस्तेन कर्म कुर्वन् दक्षिणस्कन्धस्थितेन यज्ञोपवीतेनोपवीती भवति। 'दक्षिणेन वा सव्योपगृहीतेन' दक्षिणेनैवावामहस्तेन वामहस्तान्वारब्धेनार्घ्यान् दद्यात्। 'प्रसृष्टासु' दत्तास्वप्सु। 'नोद्धरेत् प्रथमं पात्रं' इति—प्रथमं यथोक्तोद्धरणकालात् ॥

बैजवापगृह्यम्

अन्नं संस्कृत्य ब्राह्मणानयुग्माननवद्याननूचानान् यथार्हमुपवेश्य प्राचीनावीती पात्राण्यप्पूर्णानि सदर्भाणि सतिलानि पश्चादग्नेर्दर्भेषु निधाय तिष्ठन् पितॄनावाहयिष्यामीत्यामन्त्र्योशन्तस्त्वेत्यनया यजमानस्य पितरं पितामहं नामभिरावाह्याऽऽयन्तु नः पितर इति जप्त्वा पात्राण्यनुदिशति । पितरेतत्ते अर्घ्यं पितामहेदं ते अर्घ्यं प्रपितामहेदं ते अर्घ्यमिति ब्राह्मणाञ्जलिषु पात्राणि निनीय[2] पितृभ्योऽक्षयमस्त्विति शेषं दर्भेष्ववनेजयति ॥

(1) वामहस्तगृहीतेन पात्रेण दाक्षिणहस्ते जलं स्रावयन् दाक्षिणहस्तपितृतीर्थेन विप्रहस्ते तन्निनयेदिति वचनार्थः । अत्र 'एष तेऽर्घ्यं' इत्येतस्य स्थाने 'एतत्तुभ्यमस्तु तिलोदकम्' इत्युच्चारणीयम् । अयञ्च मन्त्रः प्रायेणाग्निमत्कर्तृकश्राद्धविषयमिति गम्यते, साग्निकश्राद्धे हि अर्घ्यशब्दमन्तरेणैवोदकनिषेचनाविधेरुपलम्भात् ॥ हेमाद्रिः, १२९३

(2) निनयेत् इति हेमाद्रिपाठः । पात्राणीति पात्रस्थानि जलादीन्यर्घ्यवस्तूनि । १२९१

'शेषम्' अर्घ्यं दत्त्वाऽवशिष्टमर्घ्यं पात्रस्थमेव। 'दर्भेषु' अर्घ्यपात्रधारणार्थमुपक्लृप्तेषु ॥

शाङ्खायनगृह्यम् [४,१,२-४]

ब्राह्मणान् वेदविदोऽयुग्मान् त्र्यवरार्ध्यान् पितृवदुपवेश्यायुग्मान्युदपात्राणि तिलैरन्ववकीर्यासावेतत्ते इत्यनुदिश्य ब्राह्मणानां पाणौ निनयेत् ॥

'त्र्यवरार्ध्याः' त्रयोऽवरार्ध्या निकृष्टसंख्या येषु तेषु ब्राह्मणेषु।

तथा निगमः

श्वःश्वो नापिताभ्यङ्गोन्मर्दनस्नानदन्तधावनादिभिरभ्यर्च्य स्नातानागतान् पाद्यार्घ्याचमनीयदर्भासनानुलेपनधूपसुमनोभिरभ्यर्च्य पित्रादीनावाहयिष्य इति पृच्छति। प्रतिपितॄनेकैकं मातुर्मातामहांश्च वृद्धावभ्यासे दर्भान् द्विगुणानासनेषु प्रदाय पादेभ्योऽन्यांश्चोल्लिख्य दक्षिणालेखायां कृत्वा लौहांश्चमसांश्चतुरः स्रक्तिलपयोदधिमधुघृतमिश्रान् महाव्याहृत्याऽऽपो हि ष्ठा शन्नोदेवीरित्यद्भिः प्रपूर्य ताभिर्व्यतिषङ्गमवदानवद्धुत्वा हस्तेष्वपोऽभिषञ्चत्यमुष्येति नामग्राहं चतुर्थेन मातामहादीनाम् ॥

'श्वःश्वः' निमन्त्रणदिवसाद्द्वितीयदिने। 'नापिताभ्यर्चनं' नखकल्पनादिना। 'वृद्धावभ्यासे' वृद्धिनिमित्तके 'अभ्यासे' आवृत्तौ श्राद्धस्य, मातृमातामहादीनां प्रतिदैवतमावाहनादि कर्तव्यम्। 'अन्यान् लौहान्' ताम्रादिमयान्। 'चतुर' इति पित्रादित्रयस्य पात्रत्रयम्, मातामहादीनां चैकमेव। 'चतुर्थेन मातामहादीनाम्' इत्यभिधानात्। 'स्रक्' ग्रथितकुसुमानि। 'ताभिः' अद्भिः 'व्यतिषङ्गं'

कृत्वा इति शेषः । 'अवदानवत्' अवदानधर्मेण ॥[1]

**शङ्खलिखितौ**

अपसव्यं वासोयज्ञोपवीते कृत्वा तिलैरवकीर्य सवसुरभितिलोन्मिश्रं पात्रेषूदकं दत्त्वा शन्नो देवीरिति ब्राह्मणाननुज्ञाप्य पितॄनावाहयिष्यामीत्युशन्तस्त्वेत्यावाह्य पवित्रान्तरितेषु[2] [3]ब्राह्मणहस्तेषूदकं निनयेत् ॥

**ब्रह्मपुराणे**

देवानावाहयिष्येऽहं प्राहुरावाहयस्तु च ।
विप्राङ्गुष्ठं गृहीत्वा तु विश्वेदेवान् समाह्वयेत् ॥
ततो मन्त्रं जपेन्मौनी विश्वेदेवास आगत[4] ।
द्वितीयं च जपेन्मन्त्रं विश्वेदेवाः शृणुतेति च ॥
जपेत् तृतीयं मन्त्रं तु पौराणं पुण्यवर्धनम् ।
ॐ आगच्छन्तु महाभागा विश्वेदेवा [5]वरप्रदाः ॥
ये यत्र [6]योजिताः श्राद्धे सावधाना भवन्तु ते ।
इदं वः पाद्यमर्घ्यं च पुष्पं धूपं विलेपनम् ॥
अयं दीपप्रकाशश्च विश्वेदेवाः समर्प्यते[7] ।
पितॄनावाहयिष्येऽहं शेषान् विप्रान् वदेत्ततः ॥

(1) 'श्वः' निमन्त्रणादुत्तरदिने । अभ्यङ्गग्रहणं नखादिकल्पनोपलक्षणार्थम् । तच्च 'स्वनापितेन' मूल्यादि प्रदाय यजमानोपकल्पितेन नापितेन । एतच्च प्रत्युत्थानाद्यभृति निमन्त्रणवर्जमलङ्करणान्तं मनुष्यसत्कारादिरूपत्वात् मानुषमेव न पित्र्यम् । अतो यथालोकं यज्ञोपवीतादिधर्मवतैव कार्यं न पित्र्यधर्मवता ॥ ( हेमाद्रिः, ११८२)

(2) 'उशन्तस्त्वा निधीमही'त्यनयर्चाऽऽवाहयेत् इति हेमाद्रिपाठः, १६८९

(3) हेमाद्रिः, १२९०—पवित्रान्तार्धानञ्च केचित् ब्राह्मणहस्ते पवित्रं निधाय कुर्वते, अपरे तु अर्घ्यपात्रस्याग्रे तिरश्चीनं पवित्रे विधारयन् तत्संपादयन्ति ॥

(4) हेमाद्रिः, १२२६

(5) 'महाबलाः' इति हेमाद्रिपाठः (१२२६)

(6) 'विहिताः' इति हेमाद्रिपाठः (१२२६)

(7) हेमाद्रिः, (१२४८)

आवाहयेति चोक्तस्तैः सावधाना भवन्त्विति ।
इदं वः पाद्यमर्घ्यं च चतुर्थ्यन्तं निवेदयेत् ॥
पितॄन् पितामहान् यक्ष्ये भोजनेन यथाक्रमम् ।
प्रपितामहान् सर्वांश्च तत्पितॄंश्चानुपूर्वशः ॥
उशन्तस्त्वेति च जपन् पितॄनावाहयेत्ततः ।
सोमवन्तो बर्हिषद अग्निष्वात्ताश्च येऽपरे ॥
पितरः पुण्ययशसः सर्वेऽप्यायन्तु नस्त्विति ।
ततस्तिलान् गृहे तस्मिन् विकिरेच्चाप्रदक्षिणम् ॥
श्रद्धया परया युक्तो जपेदपहतास्त्विति ।
ततो यज्ञियवृक्षोक्तपात्रेषु सकुशेषु च ॥
गृहीत्वा यः पवित्रांश्च शन्नो देवीं जपन् क्षिपेत् ।
विकिरेत्तेषु च तिलान् तिलोऽसीति जपक्रमात् ॥
अर्घ्यैः पुष्पैश्च गन्धैश्च ताः प्रपूज्याश्च शास्त्रवत् ।
ततो वामेन हस्तेन गृहीत्वा चमसान् क्रमात् ॥
पितृतीर्थेन तत्तोयं दक्षिणेन च पाणिना ।
दत्तदर्भोदके हस्ते विप्रेभ्यश्च पृथक् पृथक् ॥
दद्यान्मन्त्रं जपंश्चाथ या दिव्या आप इत्यपि ।
अमुकामुकगोत्रैतत् तुभ्यमस्तु तिलोदकम् ॥
एष तेऽर्घ्यमिति प्रोच्य तेभ्यो दद्यादथाष्टधा ।
जलं क्षीरं दधि घृतं तिलतण्डुलसर्षपाः ॥
कुशाग्राणि च पुण्यानि दत्त्वाऽऽचामेत्ततः स्वयम् ।
[अयं वो गन्ध इत्युक्त्वा गन्धं दद्यात्सुशोभनम्[1]]
इदं च पुष्पमित्युक्त्वा पुष्पाणि च निवेदयेत् ॥
अयं वो धूप इत्युक्त्वा तदग्रे तु दहेत्ततः ।
अयं वो दीप इत्युक्त्वा दीपं हृद्यं निवेदयेत् ॥
अनङ्गलग्नं सद्वस्त्रं विभवे तद्युगं शुभम् ।

(1) Restored from Hemādri, p. 1248

[इदं वो वस्त्रमित्युक्त्वा त्रितयं वा निवेदयेत्[1]]
इदं वो [2]माल्यमित्युक्त्वा दद्यान्माल्यं सुशोभनम् ॥
श्वेतचन्दनकर्पूरकुसुमानि शुभानि च ॥
विलेपनार्थं दद्यात्तु यच्चान्यत् पितृवल्लभम्[3] ।

'मौनी' विहितेतरवाग्व्याहरणनिवृत्तः । 'आगच्छन्तु' इत्यादिकस्तु तृतीयो मन्त्रः विश्वेदेवोत्पत्तिनामविशेषाऽऽसने बोद्धव्यः । 'उत्पत्तिं नाम चैतेषाम्' इत्यादि बृहस्पतिवचनानुसारात् । 'चतुर्थ्यन्तं' अमुकामुकगोत्रैतत्तुभ्यमिति प्रकारेण । 'सकुशेषु' पवित्रस्वरूपकुशसहितेषु । 'शास्त्रवत्' विहितैर्गन्धपुष्पादिभिरित्यर्थः । 'अष्टधा' अष्टप्रकारकत्वमत्र द्रव्याष्टकनिबन्धनम् । 'यच्चान्यत् पितृवल्लभं' रजतादि, जीवतां वा यदभिलषितं पित्रादीनाम् ॥

तथा

तेषु संस्रवपात्रेषु जलपूर्णेषु तत्र सः ।
पुत्रकामो मुखं पश्येन्मन्त्रं पूर्वमुखो जपेत् ॥
शुन्धन्तां लोकाः पितृसदनाः पितृसदनमसीति च ॥
ततस्तेष्वर्घ्यपात्रेषु सपिधानेषु तत्पितॄन् ।
पूजयेत् पितृपूर्वं तु पाद्यार्घ्यकुसुमादिभिः ॥

तथा

[4]स्रस्तभाण्डानि वर्ज्यानि पितृदैवतकर्मणि[5] ।
पृथिवी पितृभिर्दुग्धा पात्रे रौप्यमये पुरा ॥

(1) Missing in the text; restored from Hemādri, p. 1248

(2) माल्यं ग्रथितपुष्पाणि—हेमाद्रिः ।

(3) विलेपनञ्च द्विजानां श्राद्धकर्ता कुर्यात् त एव वा कुर्युः । (हेमाद्रिः, १२४३)

(4) 'भग्नभाण्डानी'ति श्राद्धक्रियाकौमुद्याम् (१२३)

(5) सुवर्णरूप्यताम्रास्मशङ्खस्फटिकशुक्तयः । भिन्नान्यपि प्रयोज्यानि पितृदैवतकर्मणि ॥ पृथिवी etc. (१२६)

स्वधामन्त्रं च तत्तस्मात्तेभ्यः प्रियतरं सदा ।
रौप्यपात्रेण पाद्यादि[1] तस्मात् सूक्ष्मेऽपि कारयेत् ॥
दत्त्वा हेममये पात्रे रूपवान् स्यात्स मानवः[2] ॥
दत्त्वा रत्नमये पात्रे सर्वरत्नाधिपो भवेत् ।
पालाशे ब्रह्मवर्चस्वी चाश्वत्थे [3]राज्यमाप्नुयात् ॥
पात्र औदुम्बरे दत्त्वा सर्वभूताधिपो भवेत् ।
दत्त्वा न्यग्रोधपात्रे तु प्रजां तुष्टिं श्रियं लभेत् ॥
रक्षोघ्ने काश्मरीपात्रे[4] दत्त्वा पुण्यं लभेद्यशः ।
सौभाग्यं चाथ माधूके फल्गुपात्रे च सम्पदम् ।
श्वेतार्कमन्दारमये दत्त्वा च मतिमान् भवेत् ॥
बिल्वपात्रे धनं बुद्धिं[5] दीर्घमायुरवाप्नुयात् ।
अथ पद्मपुटे दत्वा मुनीनां वल्लभो भवेत् ॥
सिक्ते मधुघृताभ्यां च यथासंभवमेव वा ॥

'स्रस्तभाण्डं' विशीर्णभाण्डम् । 'फल्गुपात्रं' काष्ठोदुम्बरपात्रम् ॥

वायुपुराणे

तथार्घ्यपिण्डभोज्येषु पितॄणां रजतं वरम् ।
अमङ्गल्यं प्रयत्नेन देवकार्येषु वर्जयेत् ॥
वर्जयेदित्यनुवृत्तौ विष्णुः [७९,५-११]

(1) 'चार्घ्यादि' इति गदाधरपाठः ।
(2) 'स्यादमत्सरः' इति गदाधरः
(3) 'वह्यमाप्नुयात्' इति तत्र पाठः (१२७)–'वह्यं' वाहनम् ।
(4) 'काश्मरी' गम्भारी (गदाधरः)
(5) 'वृद्धिं' इति गदाधरपाठः ।

उग्रगन्धीन्यगन्धीनि कण्टकिजातानि[1] रक्तानि पुष्पाणि च । सितानि[2] सुगन्धीनि कण्टकिजातान्यपि[3] जलजानि रक्तान्यपि दद्यात् । [4]वसामज्जाद्यं दीपार्थे न दद्यात् । जीवजं च सर्वं न धूपार्थे । तैलघृते दद्यात् । मधुघृतसहितं गुग्गुलुं दद्यात् । चन्दनकुङ्कुमकर्पूरागुरुपद्मकान्यनुलेपाय[5] ॥

'वसामज्जाद्यं' इत्याद्यशब्दादन्यदपि जीवजमेवंविधं वर्ज्यमिति गम्यते । 'तैलघृते दद्यात्', दीपार्थमिति शेषः ।

शङ्खः

जलोद्भवानि देयानि रक्तान्यापि विशेषतः ।
ऊर्णासूत्रं प्रदातव्यं कार्पासमथवा नवम् ॥
दशां विवर्जयेत्प्राज्ञो यद्यप्यहतवस्त्रजाम्[6] ।
उग्रगन्धीन्यगन्धीनि चैत्यवृक्षोद्भवानि च ॥
पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि च ।
घृतेन दीपो दातव्यस्तिलतैलेन वा पुनः[7] ॥
धूपार्थे गुग्गुलुं दद्यात् घृतयुक्तं मधूत्कटम्[8] ।

(1) कण्टकिजानि इति मुद्रितविष्णुस्मृतौ

(2) शुक्लानि इति मु. वि.

(3) कण्टकिजान्यपि इति मु. वि.

(4) 'वसां मेदं च,' 'दीपार्थे' इति मु. वि. In Jolly's edn. the order of the sūtras is as under—वसां मेदं च दीपार्थे न दद्यात् । घृतं तैलं वा दद्यात् । जीवजं सर्वधूपार्थे न दद्यात ।

(5) अनुलेपार्थे इति मु. वि ; 'अनुलेपनाय' इति हेमाद्रिपाठः (६७९)

(6) अहतलक्षणमाह प्रचेताः—ईषद्धौतं नवं चैव सदशं यन्न धारितम् । अहतं तं विजानीयात् सर्वकर्मसु पावनम् ॥ (हेमाद्रिः, ६९५)

(7) पुनरुक्तितयात्र द्वितीयार्धोऽपेक्षितः—
'वसामेदोद्भवं दीपं प्रयत्नेन विवर्जयेत' इति (हेमाद्रिः, ६९२)

(8) हेमाद्रिः, ६८७

ब्रह्माण्डपुराणे

शुक्लाः सुमनसः श्रेष्ठास्तथा पद्मोत्पलानि च ।
गन्धरूपोपपन्नानि यानि चान्यानि कृत्स्नशः ॥
जपादिकुसुमं[1] भाण्डी रूषिका च कुरण्टकः ।
पुष्पाणि वर्जनीयानि श्राद्धकर्मणि नित्यशः[2] ॥

जपादिशब्दादेवंविधं रक्तकुसुमम् । 'भाण्डी' मञ्जिष्ठा । 'रूषिका' अर्कपुष्पम् । 'कुरुण्टकः' पीताम्लातकपुष्पम् ।

बह्मपुराणे

उग्रगन्धीन्यगन्धीनि दुष्टानि च विवर्जयेत् ।
चन्दनागुरुणी चोभे तथैवोशीरपद्मकम् ॥
तुरुष्कं गुग्गुलुं चैव घृताक्तं युगपद्दहेत् ।
घृतं न केवलं दद्याद्दुष्टं वा तृणगुग्गुलुम् ॥

'तुरुष्कं' सिंहकरसः । 'तृणगुग्गुलुः' सर्जरसः ।

वायुपुराणे

लोके श्रेष्ठतमं सर्वमात्मनश्चापि यत्प्रियम् ।
सर्वं पितॄणां दातव्यं तदेवाक्षयमिच्छता ॥
जाम्बूनदमयं दिव्यं विमानं सूर्यसन्निभम् ।
दिव्याप्सरोभिः संपूर्णमन्नदो लभतेऽक्षयम् ॥
आच्छादनं तु यो दद्यादहतं श्राद्धकर्मणि ।
आयुःप्राकाम्यमैश्वर्यं रूपं च लभते शुभम् ॥

(1) 'सुमना' इति हेमाद्रिपाठः (६८४)

(2) 'जपा' रुद्रपुष्पम् । आदिशब्दः प्रकारवचनः । तेन जपाकुसुमसदृशानां करवीरादिकुसुमानां वर्ज्यत्वम् । 'सुमना' जातिः । सुमना मालतीजातिरिति स्मरणात् । 'भण्डी' मञ्जिष्ठा । 'रूषिका' अर्कः । 'कुरण्टकः' पीतपुष्पमहासहा । जातीकुसुमनिषेधोऽत्र न नित्यः ॥ ( हेमाद्रिः ६८४)

यज्ञोपवीतं यो दद्याच्छ्राद्धकाले तु धर्मवित्।
पावनं सर्वविप्राणां ब्रह्मदानस्य तत्फलम् ॥
कृतं विप्रेण यो दद्याच्छ्राद्धकाले कमण्डलुम् ।
मधुक्षीरस्रवा धेनुर्दातारमनुगच्छति ॥
चक्रविद्धं तु यो दद्याच्छ्राद्धकाले कमण्डलुम् ।
धेनुं स लभते दिव्यां घटोपकृतदोहनाम् ॥
तूलपूर्णे तु यो दद्यात्पादुके श्राद्धकर्मणि ।
शोभनं लभते यानं पादयोः सुखमेव च ॥
व्यजनं तालवृन्तं च दद्याद्विप्राय सत्कृतम् ।
प्राप्नुयात् स्पर्शयुक्तानि सुगन्धीनि मृदूनि च ॥
श्राद्धेषूपानहौ दद्याद्ब्राह्मणेभ्यः सदा बुधः ।
दिव्यं च लभते चक्षुर्वाजियुक्तांस्तथा रथान् ॥
श्रेष्ठं छत्रं च यो दद्यात् पुष्पमालाविभूषितम् ।
प्रासादो ह्युत्तमो भूत्वा गच्छन्तमनुगच्छति ॥
शरणं रत्नसंपूर्णं सशय्यासनभोजनम् ।
श्राद्धे दत्वा पितृभ्यस्तु नाकपृष्ठे महीयते ॥
मुक्तावैदूर्यवासांसि रत्नानि विविधानि च ।
वाहनानि च मुख्यानि अयुतान्यर्बुदानि च ॥
सुमहज्ज्वलनप्रख्यं सर्वकामसमन्वितम् ।
चन्द्रसूर्यप्रभं दिव्यं विमानं लभते ध्रुवम् ॥
अप्सरोभिः परिवृतं कामगं तु मनोजवम् ।
स वसन् वै विमानाग्रे स्तूयमानस्सुरोत्तमैः ॥
दिव्यैः पुष्पैः प्रसिञ्चन्ति पूर्णवृष्टिभिरेव वा ।
गन्धर्वाप्सरसस्तत्र गायन्त्यो वादयन्ति च ॥
कन्यायुवतिमध्यस्थाहसिताभरणस्वनैः ।
सुस्वनैस्ते विबोध्यन्ते सततं हि मनोरमैः ॥
अश्वदानसहस्रेण रथदानशतेन च ।

दन्तिनां हि सहस्रेण योगिष्वावसथो वरः ॥
दद्यात्पवित्रं योगिभ्यो यस्तूज्ज्वलनमम्भसि ।
अथ निष्कसहस्रस्य फलं प्राप्नोति मानवः ॥
जीवितस्य प्रदानाद्धि नान्यदानं विशिष्यते ।
तस्मात्सर्वप्रयत्नेन देयं प्राणाभिरक्षणम् ॥
अहिंसा सर्वदैवत्या पवित्रा सर्वदायिनी ।
दानं हि जीवितस्याहुर्दानानां परमं बुधाः ॥
लवणेन सुवर्णानि श्राद्धे पात्राणि दापयेत् ।
रसास्तमुपतिष्ठन्ति भक्ष्यं सौभाग्यमेव च ॥
तिलानिक्षूंस्तथा भोज्यं श्राद्धे सत्कृत्य दापयेत् ।
मित्राणि लभते लोके स्त्रीषु सौभाग्यमेव च ॥
पात्रं वै तैजसं दद्यान्मनोज्ञं श्राद्धभोजने ।
पात्रं भवति कामानां विद्यानां च धनस्य च ॥
राजतं काञ्चनं चैव दद्याच्छ्राद्धेषु यः पुमान् ।
दत्वा च लभते दानात् प्राकाम्यं धनमेव च ॥
धेनुं श्राद्धेषु यो दद्याद्गृष्टिं कुम्भोपदोहनीम् ।
गावस्तमुपतिष्ठन्ति गवां पुष्टिस्तथैव च ॥
दद्याद्यः शिशिरे ह्यग्निं बहुकाष्ठं प्रयत्नतः ।
कायाग्निदीप्तिप्राकाम्यं सौभाग्यं रूपमेव च ॥
इन्धनानि च यो दद्याद्द्विजेभ्यः शिशिरागमे ।
नित्यं जयति संग्रामे श्रिया युक्तश्च दीप्यते ॥
सुरभीणि तु स्नानानि गन्धवन्ति तथैव च ।
पूरयित्वा तु पात्राणि श्राद्धे सत्कृत्य दापयेत् ॥
गन्धवाहा महानद्यः सुखानि विविधानि च ।
दातारमुपतिष्ठन्ति युवत्यश्च पतिव्रताः ॥
शयनासनयानानि भूमयो वाहनानि च ।
श्राद्धे ह्येतानि यो दद्यादश्वमेधफलं लभेत् ॥

वनं पुष्पफलोपेतं दत्वा गोसवमश्नुते ।
कूपारामतडागानि क्षेत्रघोषगृहाणि च ॥
तान् दत्वा मोदते स्वर्गे नित्यमाचन्द्रतारकम् ।
स्वास्तीर्णशयनं दत्वा श्राद्धे रत्नविभूषितम् ॥
पितरस्तस्य तुष्यन्ति सुखं चानन्त्यमश्नुते ।
अस्मिंल्लोके वसन् मोदेत स्यन्दनैस्तु सवाहनैः ॥
राजभिः पूज्यते चापि धनैर्धान्यैश्च वर्धते ।
वर्णकौशेयपत्रोर्णे तथा प्रावारकम्बलः ॥
अजिनं क्षौमजं पट्टं प्रवेणीमृगलोमिकाः ।
दत्वा चैतानि विप्रेभ्यो भोजयित्वा यथाविधि ॥
प्राप्नोति श्रद्दधानस्तु वाजपेयस्य यत्फलम् ।
विद्या नार्यः सुरूपाश्च पुत्रा भृत्याश्च किंकराः ॥
वशे तिष्ठन्ति भूतानि अस्मिंल्लोके त्वनामयम् ।
क्षौमकौशेयकार्पासं दुकूलमहतं तथा ॥
श्राद्धे ह्येतानि यो दद्यात् कामानाप्नोत्यनुत्तमान् ।
अलक्ष्मीं नाशयत्याशु तमः सूर्योदये यथा ॥
भ्राजते च विमानाग्रे नक्षत्रेष्विव चन्द्रमाः ।
वासो हि सर्वदैवत्यं सर्वदेवेष्वभिष्टुतम् ॥
वस्त्राभावे क्रिया नास्ति यज्ञा वेदास्तपांसि च ।
तस्माद्वस्त्राणि देयानि श्राद्धकाले विशेषतः ॥

'प्राकाम्यं' ऐश्वर्यविशेषः । 'गृष्टिः' प्रथमप्रसूता गौः । 'वर्णकौशेयं' पीतादिवर्णकौशेयम् । 'प्रावारकम्बलः' आच्छादनयोग्यः सूक्ष्मकम्बलः । 'अजिनं' कटिसूत्रम् । 'क्षौमजं' अतिसूक्ष्मपट्टनिर्मितं चर्म इति प्रसिद्धम् । 'प्रवेणी' गजास्तरणकम्बलः ॥

तथा

राजतं रजताक्तं वा पितॄणां पात्रमुच्यते ।

रजतस्य कथा वापि दर्शनं दानमेव च ॥
अनन्तमक्षयं स्वर्गं राजतं दानमुच्यते ॥

ब्रह्मपुराणे

मण्डलानि च कार्याणि नीवारैश्चूर्णकैः शुभैः ॥
गौरमृत्तिकया वापि प्रणीतेनाथ भस्मना ॥
पाषाणचूर्णसङ्कीर्णमाहृतं तत्र वर्जयेत् ॥

## ॥ १७-अ ॥

## ॥ अथाग्नौकरणम् ॥

तत्र याज्ञवल्क्यः [१,२३६-२३८]

अग्नौ [1]करिष्य आदाय पृच्छत्यन्नं घृतप्लुतम् ।
कुरुष्वेत्यभ्यनुज्ञातो हुत्वाऽग्नौ पितृयज्ञवत् ॥
हुतशेषं प्रदद्यात्तु भाजनेषु समाहितः ।
यथालाभोपपन्नेषु रौप्येषु च [2]विशेषतः ॥

'अग्नौ करिष्ये' इति पृच्छति। 'घृतप्लुतमन्नमादाय' इत्यन्वयः । 'पितृयज्ञवत्' पिण्डपितृयज्ञाङ्गभूते होमे यावती इतिकर्तव्यता तया इत्यर्थः । 'यथालाभोपपन्नेषु' विहितानामन्यतमेषु ॥

आश्वलायनः [गृ. सू., ४,९,२-९]

उद्धृत्य घृताक्तमन्नमनुज्ञापयत्यग्नौ करिष्ये करवै करवाणीति [वा]। प्रत्यभ्यनुज्ञा क्रियतां कुरुष्व कुर्विति। अथाग्नौ जुहोति यथोक्तं पुरस्तात्[3]। अभ्यनुज्ञातायां पाणिष्वेव वा। अग्निमुखा वै देवाः पाणिमुखाः पितर इति ह ब्राह्मणम् । यदि प्राणिष्वाचान्तेष्वन्यदन्नमनुदिशति । अन्नमन्ने। सृष्टं दत्तमाध्नुकमिति ॥

(1) 'करिष्यन्नादाय' इति विश्वेश्वरविज्ञानेश्वरौ । 'करिष्य आदाय' इति अपरार्कः (४८९)

(2) 'रौप्येषु तु' इति विश्वेश्वरः—'तुशब्दोऽवधाराणार्थः' इति तेन व्याख्यातम् ।

(3) 'पुरस्तात्' पूर्वपिण्डपितृयज्ञप्रकरण इत्यर्थः (हेमाद्रिः, १३२४)

'करिष्ये' इत्यादिप्रश्नत्रये 'क्रियतां' इत्याद्युत्तरत्रये च यथासङ्ख्यं प्रयोगनियमः। अन्यथा पर्यायपदानां सहोपादानवैयर्थ्यात्। 'यथोक्तं पुरस्ताद्' इति, प्राचीनावीती-ध्ममुपसमाधाय इत्याश्वलायनश्रौतसूत्रे। 'पाणिष्वेव वा' इत्यग्न्यभावे बोद्धव्यम्। 'अग्न्यभावे तु विप्रस्य पाणावेवो-पपादयेत्' इति मनु [३,२१२] वचनात्। 'यदि पाणिषु' इति, यदि पाणिषु हूयते तदा 'आचान्तेष्वन्यदन्नम्' 'अनुदि-शति' ददाति। इदमाचमनीयं पिण्डप्रदानान्तरं च नैमित्ति-कम्। न तु दत्तस्य भक्षणाशङ्का कर्तव्या। 'अन्नं पाणितले दत्तं पूर्वमश्नन्त्यबुद्धयः' इत्यत्रैव निन्दाश्रुतेः॥

बैजवापगृह्यम्

यज्ञोपवीत्यग्नौ करवाणीत्यामन्त्र्याग्नौकरणं पिण्ड-पितृयज्ञवत्। आवृतो वा सर्वमनुक्रामेत्॥

निगमः

अवनेज्यान्नमुद्धृत्याज्येनाभिघार्याग्नौ करिष्यामीति पृच्छति। कुरुष्वेत्यनुज्ञातः समित्पूर्वकमग्नावाहुतीर्जुहोति॥

'अवनेज्य' अर्घ्यप्रदानानन्तरं ब्राह्मणहस्ते जलं दत्वा॥

शङ्खलिखितौ

[1]धूपगन्धमाल्यैरलंकृत्य ब्राह्मणान् सघृतमन्नं समनु-ज्ञाप्य दर्भैर्दक्षिणामुखैरग्निं परिस्तीर्य जुहुयात्[1]। यमाया-ङ्गिरसे पितृमते स्वाहा। [2]अग्नये कव्यवाहनाय स्वाहा। सोमाय पितृमते स्वाहेति॥

(1) हेमाद्रिः, १३५३
(2) हेमाद्रिः, १३५४

हारीतः[1]

आसाद्योदपात्रेषु समन्यायन्तीत्यप आसिच्य सुमनसश्चोत्पूय ब्राह्मणैरनुज्ञातः [2]समीत्स्वेतीध्ममाधायाऽऽवाह्याऽग्निष्वात्तादीन् ब्राह्मणस्थानुदपात्रैर्यथार्थमर्चयित्वा मेक्षणपाणिरनुज्ञायते[3]। यत् सोमाय पितृमते जुहोति सोमज्येष्ठान् तेन सोमपांश्च पितॄन् प्रीणाति । यद्यमायाङ्गिरसे[4] तेन यमज्येष्ठान् बर्हिषदस्तेनाग्निष्वात्तांश्च। यदग्निं कव्यवाहनं स्विष्टकृतं तेन यन्मेक्षणमादधत्यात्मानं प्रीणाति । हुतोच्छिष्टं ब्राह्मणेभ्यः प्रदाय पिण्डेभ्योऽवशेषयेत् ॥

'आसाद्य' उदपात्राणि । 'उत्पूय' प्रोक्षणीवन्मन्त्रवर्जम् । 'अनुज्ञातः समीत्स्वेति', अग्निं समीत्स्व इति ब्राह्मणैरनुज्ञातः[5] ॥

(1) हेमाद्रिः, १३४७

(2) 'सामिधेन्येध्ममधाय' इति हेमाद्रिपाठः

(3) 'अनुज्ञातो' इति हेमाद्रिपाठः ।

(4) 'यमायाङ्गिरस्वते' इति हेमाद्रिः

(5) सामिधेन्येत्यत्र हरिहरेण समीत्स्वेतीति पाठो दर्शितः। वचनं च व्याख्यातम् । तद्यथा—"समन्यायन्त्युपयन्त्यन्या इत्यनेन मन्त्रेण अर्घ्यपात्रेषु जलं प्रक्षिप्य तदुपरि 'सुमनसः' पुष्पाणि च क्षिप्त्वा प्रोक्षणीवत् मन्त्ररहितमेवोत्पवनं कृत्वा ब्राह्मणैः समीत्स्व इत्येवमनुज्ञातः सन् इध्मं अग्निसमिन्धार्थकाष्ठं अग्नौ क्षिपेत् । अनुज्ञावचनदर्शनादर्थात् पूर्वकालेऽग्निमिन्धनं करवाणीत्यादि प्रार्थनावाक्यं श्राद्धकर्त्रा प्रयोज्यमित्यनुमीयते । एवमिध्ममादाय आवाहनमन्त्रैः पितॄनावाह्य अनन्तरं पूर्वोपकल्पितैः उदपात्रैः ब्राह्मणरूपाधिष्ठानस्थितान् अग्निष्वात्तादीन्, 'आदि'ग्रहणात् हविर्भुक्प्रभृतीन् यथा यस्य वर्णस्य यैः अर्चितैरर्थैः श्राद्धप्रयोजनसंपत्तिः तानर्चयेत् । ते च 'सोमपा नाम विप्राणां' इत्यादिना मन्त्रादिभिः निर्दिष्टाः । यद्वा आवाहन एव मृतपित्राद्यधिष्ठातृभावेन अग्निष्वात्तादिसंकल्पः । अर्चनन्तु पित्रादित्रयस्यैव। नामभिः यथार्थमिति वचनात् । एवं च जीवत्पितृकादेः द्वयार्चनमिति सिध्यति । अथ 'मेक्षणपाणिः अग्नौ करिष्यामि' इत्यादि पृष्ट्वा, 'कुरुष्व' इत्यनुज्ञातः, सोमादिभ्यः आहुतित्रयं हुत्वा, मेक्षणं अन्ते अग्नौ आदध्यात् । हुतावशेषन्तु पित्र्यविप्रपात्रेषु कियान्निक्षिप्यान्यत् पिण्डार्थमवशेषयेदिति ॥हेमाद्रिः,१३४७-१३४८

विष्णुः [७३, ९-१४]

आमश्राद्धेषु काम्येषु च प्रथमपञ्चकेनाग्निं हुत्वा[1]। पशुश्राद्धेषु मध्यमपञ्चकेन । अमावास्यां [अमावास्यासु][2] उत्तमपञ्चकेन । आग्रहायण्या ऊर्ध्वं कृष्णाष्टकासु च क्रमेणैव प्रथममध्यमोत्तमपञ्चकैः । [अन्व]ष्टकासु च । ततो ब्राह्मणानुज्ञातः पितॄनावाहयेत्[3] । आयन्तु सुरा[अपयन्त्वसुरा] इति द्वाभ्यां तिलैर्यातुधानविवर्जनं [यातुधानानां विसर्जनं] कृत्वा[4] । एतद्वः [एत] पितरः सर्वांस्तानग्न आ मे यन्तु एत [एतद्वः] पितर इत्यावाहनं कृत्वा कुशतिलमिश्रेण गन्धोदकेन यास्तिष्ठन्त्यमृता वागिति यन्मे मातेति च पाद्यं [निर्वर्त्य निवेद्यार्घ्यं कृत्वा] निवेद्य [च] अनुलेपनवस्त्र[कुशास्तिलवस्त्र]पुष्पालङ्कारधूपैः [धूपदीपैर्यथा]शक्त्या विप्रान्समभ्यर्च्य [घृतप्लुतमन्नमादाय] आदित्या[रुद्रा]वसव इति वीक्ष्याग्नौ करिष्य इत्युक्त्वा [करवाणीत्युक्त्वा] अनुज्ञातश्च विप्रैः[तत्र विप्रैः]प्राग्वदग्नावाहुतित्रयं हुत्वा[कुर्वित्युक्त आहुतित्रयं दद्यात् ][5] । ये मामकाः पितरः एतद्वः पितरोऽयं यज्ञ इति च सर्वाभि-

(1) रक्षोघ्नं पञ्चदशर्चं सूक्तं काठके प्रसिद्धम् [३९,१०,१-१५]। तस्य आद्येन पञ्चकेन [३९,१०,१-५] वैश्वदेविकपूजानन्तरं, पित्रावाहनात्पूर्वमेव अग्निहोमः कार्यः ।

(2) Words in rectangular brackets represent the variant readings of the printed *Viṣṇusmṛti* (ed. J. Jolly).

(3) काठकीयश्राद्धप्रयोगमाह । ततो होमानन्तरं वक्ष्यमाणरीत्या यातुधानानपसार्य ब्राह्मणान् 'पितॄनावाहयिष्ये' इत्यनुज्ञाप्य, 'आवाहय' इति तैरनुज्ञातः पितॄनावाहयेत् ।

(4) उक्तहोमसमाप्त्यनन्तरं 'अपयन्तु' इति मन्त्रद्वयेन तिलैः श्राद्धविघ्नकर्तॄन् यातुधानानपसार्य आवाहयेत् । मन्त्रावाहनक्रममाह ।

(5) उक्तप्रतीकेन मन्त्रेण आवाहनम् । उक्तप्रतीकाभ्यां मन्त्राभ्यां पाद्यमासनादिभिः अर्घ्यं संपाद्य गन्धादिदीपान्तैः यथोक्तप्रकारेण शक्त्या देवपितृब्राह्मणान् संपूज्य गृहीतमन्नं 'आदित्य' इति मन्त्रेणावेक्ष्य, पृष्ट्वा, उत्तरे लब्धे, 'सोमाय पितृमते स्वधा नमः', 'यमायाङ्गिरसे स्वधा नमः' 'अग्नये कव्यवाहनाय स्वधा नमः' इति मन्त्रत्रयेण आहुतित्रयं जुहुयात् ।

मन्त्रणं [हविरनुमन्त्रणं] कृत्वा [वृत्वा] यथोपपन्नेषु पात्रेषु विशेषाद्रजतमयेषु[अन्नं]नमो विश्वेभ्यो देवेभ्य इत्यन्नमादौ प्राङ्मुखयोर्निवेदयेत्[1] । पित्रे पितामहाय प्रपितामहाय[च] नामगोत्राभ्यामुदङ्मुखेषु[2] ॥

'आमश्राद्धं' लौगाक्षिगृह्यानुसारेण ज्योतिष्टोमादावारम्भे नान्दीमुखश्राद्धं मांसरहितं यत्क्रियते। 'काम्यश्राद्धं' पञ्चम्यादौ पुत्रार्थिना क्रियमाणम् । 'प्रथमपञ्चकेन' इति, इयमेव सेति पञ्चदशर्चोऽनुवाकः तैत्तरीयके[3] काठके[4] च पठ्यते । तस्य यथाक्रमं प्रथमद्वितीयतृतीयपञ्चकाः स्थालीपाकेनाग्नौकरणहोमे विनियुज्यन्ते । 'पशुश्राद्धं' समाप्तेऽब्दे पशुश्राद्धं विधिवत्प्रतिपादयेदिति हारीतोक्तं सपिण्डीकरणश्राद्धम् । 'आदित्या वसव इति वीक्ष्य' 'आदित्या वसव' इत्यनेन मन्त्रेण ब्राह्मणानीक्षित्वा ॥

बौधायनः [२, १४, ७,-१४[

अथैनास्तिलमिश्रा अपः प्रतिग्राह्य गन्धैर्माल्येन चाऽलङ्कृत्याऽग्नौ करिष्यामीत्यनुज्ञातोऽग्निमुपसमाधाय संपरिस्तीर्य [+अग्निमुखात्कृत्वाऽऽज्यस्यैव] तिस्र आहुतीर्जुहोति—"सोमाय पितृमते [पितृपीताय] स्वधा नमः स्वाहा। यमायाऽङ्गिरस्वते पितृमते स्वधा नमः स्वाहा । अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः

(1) 'ये मामकाः' इत्यादि त्रिभिर्मन्त्रैः अनुमन्त्र्य यथामिलितेषु सौवर्णेषु दैवे, राजतेषु पित्र्ये वा 'नम' इति मन्त्रेण वैश्वदेविकयोः ब्राह्मणयोः प्रथमं निवेदयेत् । तत्र उपवीतिना कार्यम् ।

(2) ततश्च अमुकशर्मणेऽस्मत्पित्रे, अस्मद्गोत्राय वसुरूपाय इदमन्नं स्वधा नम इति वाक्यप्रयोगेण अन्नं निवेदयेत् ॥ [केशववैजयन्ती]

(3) तैत्तिरीयसंहिता, ४,३,११,१–; तैत्तिरीय ब्राह्मण, २,५,५,३–;

(4) 'इयमेवेत्यनुवाकेन पञ्चभिः पञ्चभिरभिजुहुयात्' । काठकगृह्यसूत्र, ६१,६ (५,८,६) काठक, ३९,१०

स्वाहा" इति। तच्छेषेणाऽन्नमभिघार्याऽन्नस्यैता एव तिस्रो [+आहुतीः]जुहुयात् । वयसां पिण्डान् [ण्डं]दद्यात् । "वयसां हि पितरः प्रतिमया चरन्ति" इति विज्ञायते। अथेतरान्नं ब्राह्मणेभ्यो निवेद्य ब्राह्मणस्याङ्गुष्ठेनानुदिशति[1]। पृथिवीसमं तस्य[+ते]अग्निरुपद्रष्टर्चस्ते महिमा दत्तस्याऽप्रमादाय पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य [ब्रह्मणस्त्वा]मुखेऽमृतेऽमृतं[2] जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोम्यक्षितमसि मा पितॄणां क्षेष्ठा अमुत्राऽमुष्मिन् लोक इति। पितृभ्यः स्वधा नमः। द्वितीयमनुदिशति[3] । अन्तरिक्षसमं तस्य ते[+वायुरुपश्रोता] यजूंषि ते महिमा दत्तस्याऽप्रमादाय। पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृतं [ब्रह्मणस्त्वा मुखे] जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोम्यक्षितमसि मा पितामहानां क्षेष्ठा अमुत्राऽमुष्मिन् लोके इति । तृतीयमनुदिशति[3] । द्यौसमं तस्य त आदित्योऽनुख्याता सामानि ते महिमा दत्तस्याऽप्रमादाय पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे [4]अमृतं जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोम्यक्षितमसि मा प्रपितामहानां क्षेष्ठा अमुत्राऽमुष्मिन् लोके इति[5] ॥

(1) 'अथेतरत् साङ्गुष्ठेन पाणिनाऽभिमृशति' इति मु.बौ; भोक्तुकामस्य ब्राह्मणस्य कराङ्गुष्ठेन अनखेन स्वपाणिना भोज्यद्रव्यमभिमृशति इति गोविन्दस्वामी(पृ.१९५

(2) 'अमृतेऽमृतं' नास्ति मु. बौधायनीये

(3) एते मु. बौधायनीये न द्रष्टे

(4) अमृतं—इति नास्ति मु. बौधायनीये

(5) एते त्रयो मन्त्राः पृथिव्यन्तरिक्षद्युक्रमाः। लोकानां तावन्महिमा एष वेदितव्यः। यदेतद्दीयतेऽन्नं तदामन्त्र्यते । पृथिव्या समं तस्यैवंविधस्य तव अग्निरुपद्रष्टा साक्षिभूत एवमुपश्रोता अनुख्यातेति च। ऋचस्ते महिमा महत्त्वम्। एवमुपासनया दत्तस्यान्नस्याप्रमादो भवति । पृथिव्येव तव पात्रं आधारः द्यौरेवापिधानं ब्रह्मणो ब्राह्मणस्य मुखे त्वा जुहोमि । ब्राह्मणानामित्यादि जुहोमीत्यन्तं प्रतिपत्तिमात्रम् । अक्षितमसि मा क्षेष्ठाः क्षयं मा गाः पित्रादीनां परस्मिन् लोके । [गोविन्दस्वामी]

अत्राप्युदाहरन्ति—[1]

अग्नौकरणशेषेण तदन्नमभिघारयेत् ।
तस्मिंस्तु प्राशिते दद्यादन्नं यत्प्रकृतं भवेत् ।
निरङ्गुष्ठं तु यच्छ्राद्धं तन्न प्रीणयते पितॄन्[2] ॥

'अथ' उपवेशनानन्तरम्। 'तच्छेषेण' हुताज्यशेषेण । 'वयसाम्' इत्यादिना अग्नौकरणहोमानन्तरमेव पिण्डप्रदानं कृत्वा तान् पिण्डान् पक्षिभ्यो दद्यादित्युक्तम् । एष च समाचारो बौधायनीनां क्वचिच्छ्राद्धे । 'वयसां प्रतिमया' पक्षिणां रूपेण ॥

पैठीनसिः

'देवांश्च पितॄंश्चावाहयिष्य' इत्यनुज्ञाप्य सौम्याः सन्त्वित्युक्त्वाग्नौ करिष्यामीत्यनुज्ञाप्य कुरुष्वेत्युक्ते, 'हविरित्येवं साङ्गुष्ठमन्नविधिं हवि'रित्युक्त्वा, ब्राह्मणेभ्यो दद्यात् ॥

'हविरित्येवं साङ्गुष्ठमन्नविधिं हविरित्युक्त्वा' यः साङ्गुष्ठो अन्नविधिरन्नप्रकारः तं ब्राह्मणेभ्यो दद्यादित्यर्थः ॥

ब्रह्मपुराणे

ततो घृताक्तमन्नं च सोष्णमादाय साधितम् ।
तानग्नौ करिष्य इति प्रयतः प्रार्थयन् द्विजान् ॥
[3]ॐकुरुष्वेति तैरुक्तो दक्षिणाग्निं समाह्वयेत् ।
[4]दक्षिणाग्नेश्चतुर्दिक्षु दर्भानास्तीर्य वाग्यतः ॥
दद्याच्च समिधस्तिस्रस्तस्मिन् प्रादेशमात्रिकाः ।
पलाशः समिदर्थं च नियोज्यः पितृकर्मणि ॥

(1) 'अथ वै भवति' इति मु. बौ.

(2) अग्नौकरणशेषेण सदन्नमभिघारयेत् । निरङ्गुष्ठं तु यद्दत्तं न तत् प्रीणाति वै पितॄन् ॥ इति मु. बौधायनीये ।

(3) हेमाद्रिः १३५१–१३५२

(4) 'दाक्षिणाग्नांश्चतुर्दिक्षु' इति हेमाद्रिपाठः

घृताक्ताः समिधो हुत्वा दक्षिणाग्राः समन्त्रकाः ।
मेक्षणेन घृताक्तेन जुहुयादाहुतित्रयम्[1] ॥
तथा क्षुत्तृट्क्रोधयुतो हीनमन्त्रो जुहोति यः ।
अप्रबुद्धे सधूमे वा सोऽन्धः स्यादन्यजन्मनि ॥
स्वल्पे रूक्षे स्फुलिङ्गे वा वामावर्ते भयानके ।
आर्द्रकाष्ठैश्च सम्पूर्णे फूत्कारवति पावके ॥
कृष्णार्चिषि सदुर्गन्धे तथा लिहति मेदिनीम् ।
आहुतिं जुहुयाद्यस्तु तस्य नाशो भवेद्ध्रुवम् ॥

वायुपुराणे

अनुज्ञातः कुरुष्वेति तथैव द्विजसत्तमैः ।
पत्नीमादाय पुत्रांश्च जुहुयाद्धव्यवाहनम् ॥

तथा[2]

आहृत्य दक्षिणाग्निं तु होमार्थं वै प्रयत्नतः ।
अग्न्यर्थं लौकिकं वाऽपि जुहुयात् कर्मसिद्धये[3] ॥

(1) अतः परं हेमाद्रौ नास्ति

(2) हेमाद्रि, १३३०

(3) अत्र वाक्येऽग्निशब्दः प्रकृतेऽग्नौ वर्तते । श्राद्धप्रयोगविधौ च गृह्याग्निः प्रकृतः शास्त्रप्रयोगस्य गृह्यशास्त्रविधेयत्वात् । गृह्याग्न्यधिकारेण च गृह्यशास्त्राणां प्रवृत्तिरिति तदभाव एव तत्कार्ये दक्षिणाग्निलौकिकाग्न्योः विधिर्युज्यते तत्सद्भावे तु तेनैव स्वकार्यसिद्धौ किमग्न्यन्तरविधानेन । योऽपि धर्मशास्त्रेषु पुराणेषु च श्राद्धप्रयोगविधिः स गृह्योक्तादभिन्नः प्रत्यभिज्ञानात्तेन धर्मशास्त्रेष्वपि गृह्य एवाग्निः प्रकृतः । अतो 'अग्न्यर्थे' इत्यत्र अग्निशब्दो गृह्यपरः प्रकृतत्वादिति युक्तम् । यत्पुनः 'अनाहिताग्निश्चौपसद' इति वचनं तद्दक्षिणाग्नौ अग्नौकरणविधानात् अनाहिताग्नेः श्राद्धानधिकारशङ्कानिराकरणार्थम् । ततश्च अनाहिताग्निश्चौपसदे कुर्यादेव । न तु अनाहिताग्निरेवौपसद इति तस्यार्थः । अनग्निस्तु विप्रकरेऽग्नौकरण-होमं कुर्यादित्याह मनुः—'अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत्" [३,२१२] । यत्तु जातूकर्ण्योक्तं 'अग्न्यभावे तु विप्रस्य हस्ते दद्यात्तु दक्षिणे । अग्न्यभावः स्मृतस्तावद्यावद्भार्यां न विन्दति' ॥ इति ॥ [अपरार्कः, ४९०–४९१] । यथा मार्कण्डेयपुराणे—आहिताग्निश्च जुहुयात् दक्षिणाग्नौ समाहितः । अनाहिताग्निश्चौपसदे अग्न्यभावे तथाऽप्सु वा ॥ 'औपसदो' गृह्याग्निः इति अपरार्कः [४९०]

'अग्न्यर्थं' अग्नौकरणहोमार्थम् । 'लौकिकः' आवसथ्यः ।

तथा

पुष्पाणां च फलानां च [1]भक्ष्याणामन्नतस्तथा ।
अग्रमुद्धृत्य सर्वेषां जुहुयाद्धव्यवाहनम् ॥
दक्षिणतोऽग्नये नित्यं सोमायोत्तरतस्तथा ।
एतयोरन्तरे नित्यं जुहुयाद्वै विवस्वते ॥

तथा[2]

पलाशफल्गुन्यग्रोधप्लक्षाश्वत्थविकङ्कताः ।
उदुम्बरास्तथा बिल्वश्चन्दनं यज्ञियाश्च ये ॥
सरलो देवदारुश्च सालश्च खदिरस्तथा ।
समिदर्थे प्रशस्ताः स्युरेते वृक्षा विशेषतः ॥
ग्राह्याः कण्टकिनश्चैव यज्ञिया ये च केचन[3] ।
पूजिताः समिदर्थे तु पितॄणां वचनं यथा ॥
[4]समिद्भिष्षट्फलोत्थाभिर्जुहुयाद्यो हुताशनम् ।
फलं यत्कर्मणस्तस्य तन्मे निगदतः शृणु ॥
अक्षयं सर्वकामीयमश्वमेधफलं हि तत् ।

(1) 'भक्ष्याणाञ्च प्रयत्नतः' 'जुहुयाज्जातवेदसि' इति स्मृतिचन्द्रिकापाठः (P. 818); 'जातवेदसि' उष्णभस्मगताग्नौ ।

(2) हेमाद्रिः, १३५२

(3) 'पलाशः' किंशुकः । 'फल्गुः' काकोदुम्बरिका । 'न्यग्रोधः' वटः । 'प्लक्षः' जटी । 'अश्वत्थः' पिप्पलः । 'विकङ्कतः' स्रुववृक्षः । 'उदुम्बरः' जन्तुफलः । 'बिल्वः' श्रीफलः । 'चन्दनं' मलयजम् । 'यज्ञियाः' कारमर्यशमीप्रभृतयः । 'सरलः' पतिद्रुमः । 'शालः' सालवृक्षः । 'खदिरः' बालपत्रः । 'कण्टकिनः' इङ्गुदीप्रभृतयः । (हेमाद्रिः, १३५३)

(4) 'समिद्भिस्त्वाज्यलिप्ताभिः' इति हेमाद्रिः

श्लेष्मातको नक्तमालः कपित्थः शाल्मलिस्तथा ॥
नीपो विभीतकश्चैव श्राद्धकर्मणि गर्हिताः ।
चिरिबिल्वस्तथाङ्कोल[1]स्तिन्दुकाम्रातकौ तथा ॥
[2]बकुलः कोविदारश्च एते श्राद्धेषु गर्हिताः ।
[3]निवासा येषु कीटानामयज्ञीयाश्च गर्हिताः ॥
गुल्मैश्च वेष्टिता ये वै वल्लीभिश्च समावृताः ।
शकुनीनां निवासाश्च [4]वर्जयेत्तान्महीरुहान् ॥
अन्यांश्चैवंविधान् सर्वानयज्ञीयांश्च वर्जयेत्[5] ।

मत्स्यपुराणे[6] [१८, ३२-३३]

अग्नौ कुर्यादनुज्ञातो विप्रो विप्रैर्यथाविधि ।
स्वगृह्योक्तेन विधिना कांस्ये कृत्वा चरुं ततः ॥
अग्नीषोमयमाभ्यां तु कुर्यादाप्यायनं ततः ।
दक्षिणाग्नौ प्रणीते वा य एकाग्निर्द्विजोत्तमः ॥

'प्रणीते' आवसथ्यात् पृथक्कृते । 'एकाग्निः' आवसथ्यमात्रवान् । अयं चाग्नौकरणहोम आहिताग्नेर्दक्षिणाग्नावेव । तदसम्भवे आवसथ्येन । तस्याप्यसम्भवे ब्राह्मणपाण्यादौ ॥

(1) 'तथा टङ्कः' इति हेमाद्रिः, १३५२
(2) 'तिल्वकः कोविदारश्च' इति हेमाद्रिः
(3) 'निवासश्चैव कीटानां गर्हिताः स्युरज्ञियाः' इति हेमाद्रिः
(4) 'वर्जयेत्तान द्विजोत्तमः' इति हेमाद्रिः
(5) 'वर्जयेद्वै अयज्ञियान्' इति हेमाद्रिः; 'श्लेष्मातकः' सेलुः । 'नक्तमालः' करञ्जः । 'कपित्थः' दधित्थः । 'शाल्मलिः' स्थिरायुः । 'नीपः' कदम्बः । 'चिरिबिल्वः' पूतिकरञ्जः । 'टङ्कः' अहिमारकः । 'तिन्दुकः' स्फूर्जकः । 'आम्रातकः' कपीतनः । 'तिल्वकः' रोध्रः । 'कोविदारः' काञ्चनारः । 'अयज्ञियाः' पिचुमर्दपारिभद्रादयः ॥ (हेमाद्रिः, १३५३)
(6) हेमाद्रिः, १३४७

विष्णुपुराणे [३,१९,२६]

जुहुयाद्व्यञ्जनक्षारवर्जमन्नं ततोऽनले ।

छन्दोगपरिशिष्टे कात्यायनः[1]

अग्नौकरणहोमश्च कर्तव्य उपवीतिना ।
प्राङ्मुखेनैव देवेभ्यो जुहोतीति श्रुतिश्रुतेः ॥
अपसव्येन वा कार्यो दक्षिणाभिमुखेन तु ।
निरुप्य हविरन्यस्मादन्यस्मै न हि हूयते ॥
स्वाहा कुर्यान्न चात्रान्ते न चैव जुहुयाद्धविः ।
स्वाहाकारेण हुत्वाग्नौ पश्चान्मन्त्रं समापयेत् ॥

'अपसव्येन वा कार्य' इति योऽयं सव्यापसव्यविकल्पः स्वगृह्यानुसारेण शाखाभेदव्यवस्थितो बोद्धव्यः । 'स्वाहा- कुर्याद्' इत्यादेरयमर्थः—आदावेव स्वाहेत्युक्त्वा 'सोमाय पितृमते' इति मन्त्रः समापनीयः । एवं 'स्वाहाऽग्नये कव्यवाहनाय' इत्यपि ॥

[2]मनुः, शातातपश्च प्रथमे

अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत् ।
यो ह्यग्निः स द्विजो विप्रैर्मन्त्रविद्भिरुदाहृतः ॥
अक्रोधनान् सुप्रसादान् वदन्त्येतान् पुरातनान् ।
लोकस्याप्यायने युक्तान् श्राद्धदेवान् द्विजोत्तमान् ॥

'अग्न्यभावे' अग्नौकरणहोमविनियुक्तश्रौतस्मार्ताग्नि-द्वयाऽभावे ॥

(1) गोभिलस्मृतिः, २,११७–११९
(2) मनुः, ३, २१२-२१३.

मत्स्यपुराणे

अग्न्यभावे तु विप्रस्य पाणौ वाऽथ जलेऽपि वा ।
अजाकर्णेऽश्वकर्णे वा गोष्ठे वाऽथ शिवान्तिके ॥

छन्दोगपरिशिष्टे कात्यायनः[1]

पित्र्ये यः पङ्क्तिमूर्धन्यस्तस्य पाणावनग्निकः ।
दत्वा मन्त्रवदन्येषां तूष्णीं पात्रेषु निक्षिपेत् ॥

[2]यमः

अग्नौकरणशेषं तु पित्र्ये तु[3] प्रतिपादयेत् ।
प्रतिपाद्य पितॄणां तु न दद्याद्वैश्वदेविके ॥

(1) गोभिलस्मृतिः, २,१२०-पित्र्येण पङ्क्तिमूर्धन्यस्तस्य पाणावनाग्निमान् । इति मुद्रितपाठः

(2) हेमाद्रिः, १३६२

(3) 'पित्र्येषु' इति पाठः

## ॥ १८ ॥

## ॥ अथ परिवेषणविधिः ॥

तत्र पैठीनसिः

ब्राह्मणानलङ्कृत्य मांसापूपदधिघृतमधुपायसकृसरफलविकारानिति मत्स्यांश्चोपसादयेत्[1] ॥

'इति'शब्द आद्यर्थोऽत्र शाकादिपरः । 'उपसादयेत्' उपनयेत्, पिण्डप्रदानानन्तरम् ।

[2]मनुः, बृहस्पतिश्च षष्ठे

पाणिभ्यां तूपसङ्गृह्य स्वयमन्नस्य वर्धितम् ।
विप्रान्तिके पितॄन् ध्यायन् शनकैरुपनिक्षिपेत् ॥
[3]मुक्तं ह्युभाभ्यां हस्ताभ्यां यदन्नमुपनीयते ।
तद्धि[4] प्रलुम्पन्त्यसुराः सहसा दुष्टचेतसः ॥
गुणांश्च[5] सूपशाकाद्यान् पयो दधि घृतं मधु ।
विन्यसेत्प्रयतः पूर्वं भूमावेव[6] समाहितः ॥

(1) ब्राह्मणान् गन्धपुष्पादिभिरलङ्कृत्य मांसापूपादिकं 'उपसादयेत्' परिवेषयेत् । अलङ्कृत्येत्यनेन अलङ्करणस्य परिवेषणात् पूर्वकालत्वमात्रमुच्यते, न तु अव्यवहितपूर्वकालत्वं, अतोऽलङ्करणानन्तरं अग्नौकरणं कृत्वाऽपि क्रियमाणे परिवेषणे वचनार्थोपपत्तेः पूर्वेण सहाविरोधेन एतद्व्याख्येयम् । मत्स्यग्रहणं च मांसेषु मत्स्यमांसातिशायितपितृतृप्तिकरत्वद्योतनार्थम् ॥ (हेमाद्रिः, १३६७)

(2) मनु, ३, २२४–२२८, २३१; बृहस्पति, श्राद्ध., १०१

(3) 'उभयोर्हस्तयोर्मुक्त'मिति मुद्रितमानवकोशेषु ।

(4) 'तद्विप्रलुम्पन्ति' इति मेधातिथिप्रभृतिभिरादृतपाठः

(5) 'गुणाः' व्यञ्जनानि (मेधातिथिः)

(6) 'विन्यसेत् भूमौ एव' न दारुमयफलकादौ (मेधातिथिः)

भक्ष्यं भोज्यं च विविधं मूलानि च फलानि च ।
हृद्यानि चैव मांसानि पानानि सुरभीणि च ॥
उपानीय तु तत्सर्वं शनकैः सुसमाहितः ।
परिवेषयेच्च प्रयतो [1]गुणान् सर्वान् प्रचोदयन् ॥
यद्यद्रोचेत विप्रेभ्यस्तत्तद्दद्यादमत्सरः ।
ब्रह्मोद्याश्च कथाः कुर्यात्[2] पितॄणामेतदीप्सितम् ॥

'अन्नस्य' इति तृतीयार्थे षष्ठी । 'वर्धितं' पूरितम् । 'उभाभ्यां मुक्तं' हस्तद्वयेनासंबद्धम् । 'गुणान्' अप्रधानान्, भोजने अन्नस्य प्राधान्यात् ॥

देवलः

अथ पिण्डावशिष्टान्नं विधिवद्भोजयेद्द्विजान् ।
भोजनैः सतिलैः स्नेहैर्भक्ष्यापूपविमिश्रितैः ॥
ततोऽन्नं च यथाकामं भोजयेत्तान् द्विजोत्तमान् ।
स्थित्वैवं निभृतः कर्ता मुदितः सादरः शुचिः ॥

यमः

ततो विशदमानीय भोजयेत् प्रयतो द्विजान् ।
अन्नं सूपं घृतं शाकं मांसं दधि पयो मधु ॥

(1) 'गुणान' भक्ष्यभोज्यादेः द्रव्यस्य ये गुणा अम्लत्वादयः तान् प्रणोदयमानः 'इदमम्लं इदं मधुरं इदं खाण्डवं' इत्येवमावेदिते तेषां यद्रोचते तत् दद्यादिति वक्ष्यमाणेन संबन्धः । शनकैरित्याद्यनुवाकः श्लोकपूरणार्थम् ॥ (मेधातिथिः) । सर्वान् माधुर्यगुणान् कथयन् सुचिरं अनन्यमनाः शनैः यथोपयोगं न तु युगपदेव सर्वं परिवेषयेत् । (गोविन्दराजः)

(2) 'ब्रह्मोद्याः'—'ब्रह्मणि' वेदे या उद्यन्ते कथ्यन्ते ता 'ब्रह्मोद्याः' । देवासुरयुद्धं, वृत्रवधः, सरमाकृत्यं इत्यादयः । अथवा 'कः स्विदेकाकी चरती'त्यादि [वाजसनेयसंहिता, २३, ९] ॥ (मेधातिथिः) । 'ब्रह्मोद्यं च कथा' इति वा पाठः (गोविन्दराजः)

तथा

धानाश्च मधुसंयुक्ता इक्षूंश्चैव सगोरसान्।
शर्कराफलमूलं च सर्वं दद्यादमत्सरः॥

'विशदं' विमलम्।

शङ्खलिखितौ

ततस्तिलैर्मांसैः शाकैः सूपैः कृसरपायसापूपैर्लाजैर्भक्ष्यैः पानैर्मधुना घृतेन दध्ना पायसेन च प्रभूतमिष्टतोऽन्नं दद्यादनसूयः॥

'इष्टतः' इच्छातः॥

गौतमः [१५, ५–६]

[कालनियमः]शक्तितः। प्रकर्षेद्गुणसंस्कारविधीनन्नस्य॥

'गुणसंस्कारविधीन्', 'गुणाः' व्यञ्जनानि, 'संस्काराः' सुरभित्वादयः, तान् 'प्रकर्षेत्' सातिशयान् कुर्यादित्यर्थः।

कात्यायनः

उष्णं स्विष्टमन्नं शक्त्या वा दद्यात्॥

सुष्ठु इष्टं 'स्विष्टम्'।

शङ्खः

श्राद्धं कृत्वा प्रयत्नेन त्वराक्रोधविवर्जितः।
उष्णमन्नं द्विजातिभ्यः श्रद्धया विनिवेदयेत्॥
अन्यत्र फलमूलेभ्यः पानकेभ्यश्च पण्डितः।
भोजयेद्विधिवत्पश्चाद्गन्धमाल्योज्ज्वलान् द्विजान्॥

'श्राद्धं कृत्वे'ति पूर्वकालता न विवक्षिता। 'अन्यत्र फलमूलेभ्य' इत्युष्णापेक्षया बोद्धव्यम्। तेन फलमूलादिकमनुष्णमपि देयम्॥

याज्ञवल्क्यः [१, २४०]

[1]अन्नमिष्टं हविष्यं च दद्यादक्रोधनोऽत्वरः ॥

बृहस्पतिः [श्राद्ध, ३६]

संस्कृतं व्यञ्जनाद्यं च पयोमधुघृतान्वितम् ।
श्रद्धया दीयते यस्माच्छ्राद्धं तेन निगद्यते ॥

आपस्तम्बः [२, १९, १३–१६; २०, १–२]

नैयमिकं [तु] श्राद्धं स्नेहवदेव दद्यात् । सर्पिर्मांसमिति प्रथमः कल्पः । अभावे तैलं शाकमिति । मघासु चाधिकं श्राद्धकल्पेन सर्पिर्ब्राह्मणान् भोजयेत् । मासिकश्राद्धे तिलानां द्रोणं[द्रोणं]येनोपायेन शक्नुयात्तेनोपयोजयेत् । समुदेतांश्च भोजयेत् ॥

'नैयमिकं' अमावास्याश्राद्धं, तत् स्नेहेन विना न दद्यात् । 'अधिकं ब्राह्मणान् सर्पिर्भोजयेत् श्राद्धकल्पेन' इत्यन्वयः । मघाश्राद्धे वैकल्पिकमपि तैलं देयमिति तात्पर्यम् । 'तिलानां द्रोणमुपयोजयेद्' इति ब्राह्मणभूयस्त्वपक्षे । 'येनोपायेन शक्नुयाद्' इति मोदकादिप्रकारेण । 'समुदेतान्' गुणवतः ॥

मनुः [३, २२९–२३०]

नास्रमापातयेज्जातु न कुप्येन्नानृतं वदेत् ।
न पादेन स्पृशेदन्नं न चैतमवधूनयेत्[2] ॥

(1) अन्नवचनं पक्वान्नार्थम् । चशब्दो मूलफलाद्यर्थः । 'इष्टं' ब्राह्मणाभिप्रेतं शास्त्रचोदितं वा कालशाकादि । हविष्यवचनं विदलादिनिवृत्त्यर्थम् ॥ (विश्वरूपः) । 'अक्रोधनः' क्रोधहेतुसंभवेऽपि । 'अत्वरः' अव्यग्रः ॥ (मिताक्षरा) ।

(2) 'अस्रं' अश्रु रोदनं तन्न पातयेन्न कुर्यात् । प्रायेण प्रेतश्राद्धादौ इष्टवियोगजेन दुःखानुस्मरणेन अश्रुपातो जायते, तस्य निषेधः । आनन्दाश्रुणस्तु अकस्मात्पततो न दोषः । 'न चैतमवधूनयेत्' अवकम्पयेत् । हस्तादिना पुनर्न विक्षिपेत् । अन्ये तु व्याचक्षते वाससा धूल्याद्यपनयनार्थं यदवधूननं न तदन्नस्योपरि कर्तव्यम् ॥ (मेधातिथिः)

अस्रं गमयति प्रेतान् कोपोऽरीननृतं शुनः।
पादस्पर्शस्तु रक्षांसि दुष्कृतीनवधूननम्॥

'दुष्कृतीन्' पापकारिणः।

देवलः

अस्रं न पातयेच्छ्राद्धे न जल्पेन्न हसेन्मिथः।
न विभ्रमेन्न च क्रुध्येन्नोद्विजेचात्र कर्हिचित्॥
प्राप्तेऽपि कारणे श्राद्धे नैव क्रोधं समुत्सृजेत्।
आश्रितः स्विन्नगात्रो वा न तिष्ठेत्पितृसन्निधौ॥
न चाऽत्र श्येनकाकादीन् पक्षिणः प्रतिषेधयेत्।
तद्रूपाः पितरस्तत्र समायान्तीति वैदिकम्॥

'कारणे' क्रोधस्येति शेषः। 'समुत्सृजेत्' अभिव्यञ्ज्यात्। 'आश्रितः' अपाश्रितः॥

विष्णुः [८१, १-३]

नान्नमासनमारोपयेत्। न पदा स्पृशेत्। नावक्षुतं कुर्यात्॥

यमः

इष्टं निवेदितं दत्तं भुक्तं जप्तं तपः श्रुतम्।
यातुधानाः प्रलुम्पन्ति शौचभ्रष्टं द्विजन्मनः॥
तथा क्रोधेन यद्दत्तं भुक्तं यत्त्वरया पुनः।
उभयं तद्विलुम्पन्ति यातुधानाः सराक्षसाः॥
पितॄनावाहयित्वा तु नाऽयुक्तप्रभवो भवेत्।
तस्मान्नियम्य वाचं च क्रोधं च श्राद्धमाचरेत्॥
न क्रोधं कस्यचित् कुर्यात् कस्मिंश्चिदपि कारणे।
अक्रुद्धपरिविष्टं हि श्राद्धे प्रीणयते पितॄन्॥

'अयुक्तप्रभवः' अयुक्तस्याऽसंबन्धप्रलापादेः कारणं न भवेदित्यर्थः॥

[1]बौधायनः

अश्रद्धा परमः पाप्मा पाप्मा ह्यज्ञानमुच्यते ।
अज्ञानाल्लुप्तधर्मः स्याल्लुप्तधर्मोऽधमः स्मृतः ॥
श्रद्धया शोध्यते बुद्धिः श्रद्धया शोध्यते मतिः ।
श्रद्धया प्राप्यते धर्मः श्रद्धा पाप्मप्रमोचनी ॥
तस्मादश्रद्दधानस्य हविर्नाश्नन्ति देवताः ।

'मतिः' अत्रेच्छा, बुद्धेः पृथगुपादानात् ॥

कात्यायनः

श्रद्धान्वितः श्राद्धं कुर्वीत शाकेनाऽपि ।

मनुः [३, २७५]

यद्यद्ददाति विधिवत् सम्यक्छ्रद्धासमन्वितः ।
तत्तत्पितॄणां भवति परत्रानन्तमक्षयम् ॥

यमः

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा श्राद्धेषु मिष्टान्नं मन्त्रः प्रापयते पितॄन् ॥

मनुः [३, २३३]

हर्षयेद्ब्राह्मणांस्तुष्टो भोजयेच्च शनैः शनैः ।
अन्नाद्येनासकृच्चैतान् गुणैश्च परिचोदयेत् ॥

बृहस्पतिः [श्राद्ध, १००]

भक्ष्यभोज्यगुणानुक्त्वा भोजयेद्ब्राह्मणान् शनैः ।
आख्यानैः सेतिहासैश्च पूर्ववृत्तैश्च हर्षयेत् ॥

(1) This seems to be a metrical paraphrase of *Baudhāyana-Sūtra* I, 10, 6. Hemadri p. 1031. also quotes this metrical version.

आपस्तम्बः [२, १०, ४]

[1]प्रयतः प्रसन्नमनाः सृष्टो भोजयेद्ब्राह्मणान् ॥

'सृष्टः' उत्साही ।

यमः, शातातपश्च द्वितीये

यावद्धविष्यं भवति यावत्स्विष्टं प्रदीयते ।
तावदश्नन्ति पितरो यावन्नाह ददाम्यहम् ॥
ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणो ददत् ।
तयोरन्नमभोज्यं तु भुक्त्वा[2] चान्द्रायणं चरेत् ॥
चतुर्भिः स्रौत आपन्ने हस्तेनोन्मार्जयेद् घृतम् ।
उभावेव तु बास्रौतां दाता भोक्ता न संशयः ॥
स्रुतं नखैश्चतुर्भिश्च यो दद्यात् पाणिना घृतम् ।
दाता पुण्यं न चाप्नोति भोक्ता पापतरं व्रजेत् ॥
हस्तेन घृतं शौद्रं यदपि किमानीयतां तदपि शौद्रम् ।
शीतलमन्नं शौद्रं शूद्रैः परिवेष्टितं भवति शौद्रम् ॥
माक्षिकं फाणितं शाकं गोरसं लवणं घृतम् ।
हस्तदत्तानि भुक्त्वा च दत्त्वा सान्तपनं चरेत् ॥
हस्तदत्ता च या भिक्षा सलिलं व्यञ्जनानि च ।
भुक्त्वा त्वशुचितां याति दाता स्वर्गं न गच्छति ॥

'शौद्रं' शूद्रस्यैव श्राद्धयोग्यमित्यर्थः । 'किमानीयताम्'इति पृष्ट्वा यदानीयते अन्नादिकं तदपि 'शौद्रम्' ॥

विष्णुः [७९, १२-१५]

प्रत्यक्षलवणं च न दद्यात् । हस्ते न घृतव्यञ्जनादि । तैजसानि पात्राणि दद्यात् । विशेषतो राजतानि ॥

(1) 'प्रयतः' स्नानाचमनादिना शुद्धः । 'प्रसन्नमनाः' अव्याकुलमनाः । 'सृष्टः' उत्साहवान् ॥ (गोविन्दस्वामी)

(2) 'भुक्त्या' इति श्राद्धप्रकाशपाठः (२३८)

शङ्खः

सैन्धवं लवणं यच्च तथा मानससंभवम् ।
पवित्रे परमे ह्येते प्रत्यक्षमपि नित्यशः ॥

शातातपो, वसिष्ठवृद्धशातातपौ प्रथमे च

हस्तदत्तास्तु ये स्नेहा लवणं व्यञ्जनानि च ।
दातारं नोपतिष्ठन्ति भोक्ता भुञ्जीत [1]किल्बिषम् ॥
तस्मादन्तरितं देयं पर्णेन च तृणेन वा ।
न प्रदद्यात्तु हस्तेन नायसेन कदाचन ॥

वृद्धशातातपलघुहारीतौ

आयसेन तु पात्रेण यदन्नं संप्रदीयते ।
भोक्ता विष्ठासमं[2] भुङ्क्ते दाता च नरकं व्रजेत् ॥

मनुः [३, २०२]

राजतैर्भाजनैरेषामथो वा रजतान्वितैः ।
वार्यपि श्रद्धया दत्तमक्षयायोपपद्यते ॥

हारीतः

काञ्चनेन तु पात्रेण राजतोदुम्बरेण च ।
दत्तमक्षयतां याति [3]खड्गेनार्यकृतेन च ॥

'आर्यकृतम्' त्रैवर्णिकनिर्मितमन्यदपि पात्रमभिमतम् ।

विष्णुः [७९, २२]

घृतादिदाने तैजसानि पात्राणि[खड्गपात्राणि][1] फल्गुपात्राणि च प्रशस्तानि ॥

(1) 'भक्तस्तु किल्बिषम्' इति उ.
(2) 'विष्ठाद्यन्नं' इति हेमाद्रिपाठः (६७६)
(3) 'खड्गपात्रेण चैव हि' इति हेमाद्रिपाठः (६७४)
(4) 'खड्गपात्राणि' इति मुद्रितविष्णौ हेमाद्रौ च (६७४)

वृद्धशातातपः[1]

पात्रे तु मृन्मये यस्तु श्राद्धे भोजयते पितॄन् ।
तत्र दाता पुरोधाश्च भोक्ता च नरकं व्रजेत् ॥

पैठीनसिः

मसूरमाषकोद्रवाश्चेत्ययज्ञियाः । [2]लोहानां सीसकायस-पाषाणहीनपात्राणि भग्नपात्राणि च ॥

'लोहानाम्' इति, योग्यतया सीसकायसापेक्षया निर्धारणम् । 'हीनम्' अतिक्षुद्रम् ॥

हारीतः

पङ्क्त्यां चैवोपविष्टेभ्यः समं गन्धादिभोजनम् ।
न पङ्क्त्यां विषमं दद्यान्न याचेन्न च दापयेत् ॥
याचको दापकश्चैतावुभौ नरकगामिनौ ।

भुज्यत इति 'भोजनम्' ओदनादि ॥

यमः

न पङ्क्त्यां विषमं दद्यान्न याचेन्न च दापयेत् ।
याचिता दापिता दाता सर्वे निरयगामिनः ॥
तस्माद्विद्वान्न वै दद्यान्नाभियाचेन्न दापयेत् ।
एकपङ्क्त्युपविष्टानां विषमं यः प्रयच्छति ॥
दुष्कृतं हरते पङ्क्त्या दत्तं गृह्णाति यश्च तत् ।
कुनदीसेतुकारस्य कन्याविघ्नकरस्य च ॥

(1) हेमाद्रिः, ६७४

(2) 'सीसकायसपात्राणि रीतिशेषाणि पात्राणि चेत्ययज्ञियानि' इति हेमाद्रिपाठः (६७६)

पङ्क्त्यां विषमदातुश्च निष्कृतिर्नोपपद्यते ।

'कुनदी' स्वल्पजला, तत्र सेतुना जलप्रवाहस्यात्यन्तविच्छेदात्तदुपजीविनां बहूनां पीडा जायते ॥

हारीतः

यस्त्वेकपङ्क्त्यां कुरुते विशेषं
स्नेहाद्भयाद्वा यदि वार्थहेतोः ।
ऋषिप्रणीतां स्मृतिवेददृष्टां
तां ब्रह्महत्यां मुनयो वदन्ति ॥

## ॥ १८-अ ॥

## ॥ अथान्नसंकल्पः ॥

तत्र याज्ञवल्क्यः [१, २३८]

दत्वान्नं पृथिवीपात्रमिति पात्राभिमन्त्रणम् ।
कृत्वेदं विष्णुरित्यन्ने द्विजाङ्गुष्ठं निवेदयेत् ॥

यमः

अङ्गुष्ठमात्रो भगवान् विष्णुः पर्यटते महीम् ।
राक्षसानां वधार्थाय को मेऽद्य[1]प्रहरिष्यति ॥
तस्माच्छ्राद्धेषु सर्वेषु त्वङ्गुष्ठग्रहणं स्मृतम् ।
निरङ्गुष्ठं तु यच्छ्राद्धं बहिर्जानु च यत्कृतम् ॥
[2]बहिर्जानु च यद्भुक्तं सर्वमेवासुरं भवेत् ।

विष्णुः [७३, १३-१४]

नमो विश्वेभ्यो देवेभ्य इत्यन्नमादौ प्राङ्मुखयोर्निवेदयेत् । पित्रे पितामहाय प्रपितामहाय च नामगोत्राभ्यामुदङ्मुखेषु ॥

शाङ्खायनगृह्यम् [४,१,८]

अन्नं चासावेतत्त इत्यनूद्दिश्य भोजयेत् ॥

(1) 'कोपवान् प्रहरिष्यति' इति स्मृतिचन्द्रिकापाठः । 'को मेऽद्य' इत्येव हेमाद्रिः (१३७८)

(2) 'तत्सर्वमसुरैर्भुक्तं सर्वमेवासुरं भवेत्' । (हेमाद्रिः, १३७८)

ब्रह्मपुराणे[1]

ततो मधुघृताक्तं तु सोष्णमन्नं तिलान्वितम् ।
गृहीत्वा देवतीर्थेन प्रणवेनैव तत्पुनः ॥
एतद्वोऽन्नमितीत्युक्त्वा विश्वेन्देवांश्च संयजेत् ।
पितृभ्यश्च ततो दद्यादन्नमामन्त्रणेन तु ॥
अमुकाऽमुकगोत्रैतत्तुभ्यमन्नं स्वधा नमः ।
[2]अथ दत्वा समग्रं तु जलान्नं भोजनं क्रमात् ॥
विश्वेभ्यः श्राद्धदेवेभ्यः कुर्याच्च प्रतिपादनम् ।
द्विजाङ्गुष्ठं गृहीत्वा तु पठेन्मन्त्रं च वाग्यतः ॥
पृथिवी ते पात्रमित्यन्नं गृहीतं चिन्तयेत्पठन् ।
कृष्ण हव्यमिदं रक्ष मदीयमिति कीर्तयेत् ॥
पुनस्तेनैव मन्त्रेण पितृभ्यश्च निवेदयेत् ।
एकैकस्याऽथ विप्रस्य गृहीत्वाङ्गुष्ठमादरात् ॥
अमुकामुकगोत्रैतत्तुभ्यमन्नं स्वधा नमः ।
तिलमन्नं च पानीयं सकुशं तेन चाग्रतः ॥
विकिरेत्पितृभृत्येभ्यो जपन्नपहता इति ।
तेभ्यो दद्यादपोशानं भवन्तः प्राशयन्त्विति ॥

बौधायनः [२, १४, ११-१२; १५, १-२]

अथेतरद्ब्राह्मणेभ्यो निवेद्य ब्राह्मणस्याङ्गुष्ठेनाऽनखेनाऽनुदिशति[3] । पृथिवीसमं तस्य तेऽग्निरुपद्रष्टर्चस्ते महिमा दत्तस्याऽप्रमादाय पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतं[4] जुहोमि । ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोम्यक्षितमसि मा पितॄणां क्षेष्ठा अमु-

(1) हेमाद्रिः, १३८३
(2) हेमाद्रिः, १३७७
(3) 'अथेतरत् साङ्गुष्ठेन पाणिनाऽभिमृशति' इति मुद्रितबौधायनीये ।
(4) 'ब्रह्मणस्त्वा मुखे जुहोमि' इति मुद्रितबौधायनीये

त्राऽमुष्मिन् लोक इति। द्वितीयमनुदिश ति[1]। अन्तरिक्षसमं तस्य ते वायुरुपश्रोता यजूंषि ते महिमा दत्तस्याऽप्रमादाय पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतं जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोम्य-क्षितमसि मा पितामहानां क्षेष्ठा अत्राऽमुष्मिन् लोक इति। तृतीयमनुदिशति[2]। द्यौसमं तस्य त आदित्योऽनुख्याता सामानि ते महिमा दत्तस्याऽप्रमादाय। पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतं जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोम्यक्षितमसि मा प्रपिता-महानां क्षेष्ठा अमुत्राऽमुष्मिन् लोक इति ॥

[3]अथाप्युदाहरन्ति—

अग्नौकरणशेषेण यदन्नमभिघार्यते।
[4]तस्मिंश्च प्राशिते दद्याद्यदन्यत् प्रकृतं भवेत् ॥
निरङ्गुष्ठं तु यच्छ्राद्धं न तत् प्रीणयते पितॄन्[5]।

'इतरत्' ओदनव्यञ्जनादीन्। 'अग्नौकरणशेषेण' इति, अग्नौकरणाज्यशेषेण। 'अन्नं' अग्नौकरणाय यदुद्धृतम्। 'प्राशिते' प्रक्षिप्ते हुत इति यावत्। 'अन्यत्प्रकृतं' भोजनार्थं यदोदनव्यञ्जनादि प्रसाधितम्। 'निरङ्गुष्ठं' उक्तप्रकाराङ्गुष्ठस्पर्शशून्यम् ॥

(1) 'द्वितीयमनुदिशति' इति नास्ति मुद्रितबौधायनीये
(2) 'तृतीयमनुदिशति' इति नास्ति मुद्रितबौधायनीये
(3) अथ वै भवतीति मुद्रितबौधायनीये
(4) Line omitted by printed text of Baudhāyana.
(5) 'प्रीणाति वै पितॄन्' इति मुद्रितबौधायनीये।

दद्यादिति वक्ष्यमाणे—

कात्यायनः [श्राद्धकल्पसूत्र, २, २-३]

हुतशेषं दत्वा पात्रमालभ्य जपति पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतं जुहोमि स्वाहेति। वैष्णव्यर्चा यजुषा[1] वाङ्गुष्ठमवगाह्य ॥

शङ्खलिखितौ

हविरित्येवं साङ्गुष्ठमन्नविधिं ब्राह्मणेभ्यो दद्यात् ॥

अस्यायमर्थः—'अन्नविधिः' अन्नप्रकारः पायसादिः 'साङ्गुष्ठं' ब्राह्मणाङ्गुष्ठनिवेशनपूर्वकं 'इदं हवि'रित्यभिधाय सङ्कल्पनीय इति ॥

हारीतः[2]

निरङ्गुष्ठं तु यच्छ्राद्धं तन्न प्रीणयते पितॄन्।
तस्मादङ्गुष्ठमाक्रम्य जपेन्मन्त्रं समाहितः ॥

'मन्त्रः' 'इदं विष्णुर्विचक्रमे' इति।

तथा

अथान्नं निहितं पात्रे पिहितं तद्वर्षीयसा।
संस्कृतं स्थानमायाति तद्वदङ्गुष्ठसंस्कृतम् ॥

'वर्षीयसा' अधःपात्राद्बृहत्तरेण ॥

(1) अत्र ऋग् 'इदं विष्णुः'; 'विष्णो हव्यं रक्षस्व' इति यजुः। [शु. यजु. सं., ५, १५—इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे स्वाहा ॥]

(2) हेमाद्रिः, १३७९

## ॥ १९ ॥

## ॥ अथ भोजनविधिः ॥

तत्र याज्ञवल्क्यः [१, २३९]

> सव्याहृतिकां गायत्रीं मधुवाता इति त्र्यृचम् ।
> जप्त्वा यथासुखं[1] वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः ॥

मनुः, हारीतविष्णुयमशातातपा उशना च द्वितीये[2]

> अत्युष्णं सर्वमन्नं स्याद्भुञ्जीरंस्तेऽपि वाग्यताः ।
> न च द्विजातयो ब्रूयुर्दात्रा पृष्टा हविर्गुणान् ॥
> यावदूष्म भवत्यन्ने यावदश्नन्ति वाग्यताः ।
> तावदश्नन्ति पितरो यावन्नोक्ता हविर्गुणाः ।
> हविर्गुणा न वक्तव्या यावद्वै पितृतर्पणम् ॥
> तैश्चापि तर्पितैः सम्यग्वक्तव्यं शोभनं हविः ।

वाग्यतत्वाभिधानेनैव श्राद्धभोक्तुर्हविर्गुणानभिधाने सिद्धे 'न च द्विजातयो ब्रूयु'रिति पुनर्वचनं हस्तसंज्ञादिनापि गुणप्रतिपादननिषेधपरम् ॥

देवलः

> ब्राह्मणश्च यथा शुद्धः प्रसन्नेन्द्रियमानसः ।
> पैतृकान्नमुपाश्नीयादसंभ्रान्तः प्रसन्नवान्

'प्रसन्नवान्' प्रसन्नः ॥

(1) 'यथासुखं' तु भोजनविषयम् । यद्रोचते येन च क्रमेण, ते तथैव भुञ्जीरन्नित्यर्थः (विश्वरूपः) ॥ 'वाग्यताः' मौनिनः (मिताक्षरा) ।

(2) मनुः, ३, २३६-२३७, प्रथमे द्वितीये, विष्णुः, ८१, २०, द्वितीये

तथा

अन्नपानकशीनोदं ददद्भ्यो ह्यवलोकिनः ।
वक्तव्ये कारणे संज्ञां कुर्वन् भुञ्जीत पाणिना ॥

अस्यार्थः-अन्नाद्युपनीय तद्दानार्थं दात्रा 'अवलोकितः' संज्ञां कुर्यादेव। 'वक्तव्ये' कारणे स्वीकाराऽस्वीकारहेतौ ॥

शङ्खलिखितौ

ब्राह्मणा अन्नगुणदोषौ नाभिवदेयुः । नानृतं ब्रूयुः । अन्योन्यं न प्रशंसेयुः। अन्नपानं न प्रभूतमिति ब्रूयुरन्यत्र हस्तसंज्ञायाः । यावद्भूमौ यावदप्रशस्तं यावत् सोष्म तावदश्नन्ति पितरः। अन्यत्र फलमूलपानकेभ्यः ॥

'यावद्भूमा'विति, भोजनपात्रं तिष्ठतीति शेषः । तेन तस्योद्धरणं न कर्तव्यम्। 'अप्रशस्तं' अकृतप्रशंसम्।

तथा च वराहपुराणे

उद्धरेद्यदि पात्रं तु ब्राह्मणो ज्ञानदुर्बलः ।
हरन्ति राक्षसास्तस्य भुञ्जतोऽन्नं वसुन्धरे ॥ इति

यमः

यस्तु पाणितले भुङ्क्ते यः सवायुस्तथाश्नुते ।
न चास्य पितरोऽश्नन्ति यश्चैवाग्रे प्रशंसति ॥
श्राद्धे नियुक्तो भुञ्जानो न पृच्छेल्लवणादिषु ।
उच्छिष्टाः पितरो यान्ति पृच्छतो नात्र संशयः ॥
दातुश्च पतनो बाहुर्जिह्वा भोक्तुश्च भिद्यते ।

'सवायुः' फूत्कारसहितः ॥

प्रभासखण्डे

यश्च फूत्कारवद्भुङ्क्ते यश्च पाणितले द्विजः ।

न तदश्नन्ति पितरो यत्सवायुः समश्नुते ॥

वारहपुराणे

याचते यदि दातारं ब्राह्मणो ज्ञानवर्जितः ।
पितरस्तस्य नाश्नन्ति दातुर्भोक्तुर्न संशयः ॥

विष्णुः [८१, ११-१४]

अश्नीयुश्च ब्राह्मणा वाग्यताः । न वेष्टितशिरसः । न सोपानत्काः । न पीठोपहितपादाः ॥

[1]मनुशातातपौ

यद्वेष्टितशिरा भुङ्क्ते यद्भुङ्क्ते दक्षिणामुखः ।
सोपानत्कश्च यद्भुङ्क्ते तद्वै रक्षांसि भुञ्जते ॥
[2]योऽप्रसन्नमना भुङ्क्ते सोपानत्कोऽपि वा पुनः ।
प्रलापशीलः क्रुद्धो वा स विप्रः पितृदूषकः ॥
प्रहसन् वापि यो भुङ्क्ते स नाप्याययते पितॄन् ।
यो वेष्टितशिरा भुङ्क्ते यो वा भुङ्क्ते विगर्हयन् ॥

यमः

यो वेष्टितशिरा भुङ्क्ते यद्भुङ्क्ते वृषलीपतिः ।
सोपानत्कश्च यद्भुङ्क्ते यच्चाऽश्नाति तिरस्कृतम् ॥
तत्सर्वं दानवेन्द्राय ब्रह्मा भागमकल्पयत् ।

हारीतः

उद्धृत्य पाणिर्विहसन् सक्रोधं विस्मयान्वितः ।
श्राद्धकालेषु यद्भुङ्क्ते न तत् प्रीणाति वै पितॄन् ॥
आसुरं विस्मयान्नं स्यात् क्रोधान्नं राक्षसं विदुः ।
असत्कृतमवज्ञातं पैशाचं परिचक्षते ॥

(1) मनुः ३, २३८.
(2) देवलः—इति हेमाद्रिः, १०२१

वसिष्ठः [११, २५-२६]

उभयोर्हस्तयोर्मुक्तं पितृभ्योऽन्नं निवेदितम्।
तदन्तरं प्रतीक्षन्ते ह्यसुरा दुष्टचेतसः॥
तस्मादशून्यहस्तेन कुर्यादन्नमुपागतम्।
भाजनं वा समालभ्य तिष्ठेतोच्छेषणाद्बुधः[1]॥

'तस्मादशून्यहस्तेन' दातुर्भोक्तुर्वा संबन्धसहितम्।

बौधायनः [२, १५, ३–९]

उभयोः शाखयोर्मुक्तं पितृभ्योऽन्नं निवेदितम्।
तदन्तरमुपासन्ते असुरा दुष्टचेतसः॥
यातुधानाः पिशाचाश्च प्रतिलुम्पन्ति तद्धविः।
तिलादानेष्वदायादास्तथा क्रोधवशेऽसुराः॥
काषायवासा यान् कुरुते जपहोमप्रतिग्रहान्।
न तद्देवगमं भवति हव्यकव्येषु यद्धविः॥
यच्च दत्तमनङ्गुष्ठं यच्चैव प्रतिगृह्यते।
आचामति च यस्तिष्ठन्न स तेन समृध्यते॥

आद्यन्तयोरपां प्रदानं सर्वत्र। जपप्रभृति यथाविधानम्। शेषमुक्तमष्टकाहोमे॥

'अदायादाः' असम्बन्धिनः। 'क्रोधवशे' दातरि सतीति शेषः। 'आद्यन्तयोरपां प्रदाने' आदावपां प्रदानमपोऽशनम्, 'अन्ते' भोजनसमाप्तौ। 'प्रभृति'शब्दात् पितृध्यानाद्युपादानम्॥

शातातपः

उपवीतं कटौ कृत्वा कुर्याद्गात्रानुलेपनम्।
एकवासाश्च योऽश्नीयान्निराशाः पितरो गताः॥

(1) 'उभे' इति मुद्रितवासिष्ठे

उपवीती ततः कुर्याद्वृतः श्राद्धेऽनुलेपनम् ।
न नियुक्तः शिखावर्जं माल्यं शिरसि धारयेत् ॥
सव्यादंसात् परिभ्रष्टं नाभिदेशे व्यवस्थितम् ।
एकवस्त्रं तु तं विद्याद्दैवे पित्र्ये च वर्जयेत् ॥

शङ्खलिखितौ

नाऽग्रासनस्थः पूर्वमश्नीयात् । नाभ्यधिकं दद्यात् । न प्रतिगृह्णीयात् ॥

'अग्रासनस्थः' पङ्क्तिमूर्धन्युपविष्टः । 'पूर्वम्' इतरब्राह्मणभोजनोपक्रमात् प्राक् । 'अधिकं' स्नेहादिना विषमम् ॥

यमः

अग्रासनोपविष्टस्तु यो भुङ्क्ते प्रथमं द्विजः ।
बहूनां पश्यतां सोऽज्ञः पङ्क्त्या हरति किल्बिषम् ॥

शातातपः

हस्तं प्रक्षाल्य यश्चापः पिबेद्भुक्त्वा द्विजः सदा ।
तदन्नमसुरैर्भुक्तं निराशाः पितरो गताः ॥

'भुक्त्वा' भोजनं परिसमाप्य । 'आपो'ऽत्र भोजनान्त्यचुलुकगताः ।

यमः

यत्तु भुक्त्वा पुनर्भुङ्क्ते यच्च तैलाभिघारितम् ।
रजस्वलाभिर्यद्दृष्टं तद्वै रक्षांसि भुञ्जते ॥
निरोङ्कारेण यद्भुक्तं परिविष्टं समन्युना ।
दुरात्मना च यद्भुक्तं तद्वै रक्षांसि गच्छति ॥
कीटकेशावपन्नं च क्षुतं श्वभिरवेक्षितम् ।
रुदितं चावधूतं च तद्वै रक्षांसि गच्छति ॥

अवेदव्रतचारित्रास्त्रिभिर्वर्णैर्द्विजातयः ।
मन्त्रवत्परिविष्यन्ते तद्वै रक्षांसि गच्छति ॥
विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
अश्रद्धया हुतं दत्तं तद्वै रक्षांसि गच्छति ॥

'तैलाभिघारितं' घृतासंभवे । 'निरोङ्कारः' सर्वथा वैदिकमन्त्ररहितः । 'अवधूतं' वाससेति शेषः । 'मन्त्रहीनं' 'पृथिवी ते' इत्यभिमन्त्रणरहितम् ॥

उशना

नियुक्तश्चैव यः श्राद्धे यत्किञ्चित्परिवर्जयेत्
पितरस्तस्य तं मासं नैराश्यं प्रतिपेदिरे ॥

पङ्क्तिपरिविष्टमरोचमानमपि यथाशक्ति किञ्चिदपि भक्षणीयमिति ॥

वसिष्ठः [११, ३४]

नियुक्तस्तु यतिः श्राद्धे दैवे वा मांसमुत्सृजेत् ।
यावन्ति पशुरोमाणि तावन्निरयमृच्छति ॥

आपस्तम्बः [२, १८, १२]

न चाऽतद्गुणायोच्छिष्टं दद्यात् ।

'अतद्गुणाय' श्राद्धभोक्तृगुणरहिताय ॥

मनुः [३, २४९]

श्राद्धं भुक्त्वा यदुच्छिष्टं वृषलाय प्रयच्छति ।
स मूढो नरकं याति कालसूत्रमवाक्शिराः ॥

देवलः

श्राद्धभोजी समुच्छिष्टं वृषलेभ्यो ददाति चेत् ।
स मूढोऽनिष्कृतिः प्राहुः प्रायश्चित्तेन शुध्यति ॥

'अनिष्कृतिः' प्रायश्चित्तं विना तस्य निष्कृतिर्नास्तीति 'प्राहुः' ॥

ब्रह्माण्डपुराणे

स्त्रीशूद्रायाऽनुपेताय श्राद्धोच्छिष्टं न दापयेत् ।
यो दद्याद्रागसंमोहान्न तद्गच्छति वै पितॄन् ॥
तस्मान्न देयमुच्छिष्टमन्नाद्यं श्राद्धकर्मणि ।
अन्यत्र दधिसर्पिभ्र्यां शिष्याय च सुताय च ॥

'अन्यत्र दधिसर्पिभ्र्यां' इति, दधिसर्पिर्व्यतिरिक्तमुच्छिष्टं न कस्मैचिदपि दातव्यम् । दधिसर्पिषोस्तु शिष्यपुत्रयोरपि श्राद्धभोक्तृगुणोपेतयोरभ्यनुज्ञा ॥

## ॥ २० ॥

## ॥ अथ जपादिविधिः ॥

तत्र कायात्यनः

अश्नंस्तु जपेद्व्याहृतिपूर्वां गायत्रीं सप्रणवां सकृत् त्रिर्वा रक्षोघ्नीः पित्र्यमन्त्रान् पुरुषसूक्तमन्यानि च पवित्राणि ॥

'रक्षोघ्नीः' 'कृणुष्व पाजः' इत्याद्या ऋचः[1]। 'पित्र्यमन्त्राः' 'उदीरतामवर' इत्यादयः[2]। 'पवित्राणि' शतरुद्रीयप्रभृतीनि।

निगमः

भुञ्जंस्तु जपेत् [3]सवितृमन्त्रानृग्यजुस्सामेतिहासपुराणरक्षोघ्नीः[4] पावमानीरुदीरतामवरेति मधुमतीश्च ॥

(1) तै. सं., १, २, १४

(2) तै. सं., २, ६, १२

(3) 'पवित्रमन्त्रान्' इति हेमाद्रिः, १०७१

(4) 'पुराणानि रक्षोघ्नीपावमानीरुदीरतामवरमध्वन्नवतीश्च मन्त्रान् द्वादशाष्टाक्षरप्रभृतीन्' इति हेमाद्रिणादृतपाठः। 'रक्षोघ्नीः' 'कृणुष्व पाजः प्रसितिं न पृथ्वी'मित्याद्याः पञ्चदशर्चः। 'रक्षोहणं वाजिनमाजिघर्मी'ति पञ्चविंशतिः। 'इन्द्रासोमा तपतं रक्ष उब्जतमि'ति पञ्चविंशतिः। 'अग्ने हंसन्यत्रिणमि'ति नव पावमान्यः। 'पुनन्तु मा पितर' इत्याद्याः षोडशर्चः। 'तरत्-समन्दी'ति बर्गः। 'पवस्व विश्वचर्षण' इति त्रिंशदृचः। 'त्वं सामाशी'ति द्वात्रिंशदित्येताः। 'उदीरतामवर' इत्याद्याश्चतुर्दश। 'मधुमत्यः' 'मधुबाता ऋतायत' इत्याद्याः। तद्वा नरासनयेदमित्येवंप्रकारश्च। अन्नवत्यः 'पितुं नुस्तोष'मित्याद्या एकादशर्चः॥ (हेमाद्रिः, १०७१)

**विष्णुः** [७३, १५-१६]

ततस्त्वदत्सु ब्राह्मणेषु यन्मे प्रकामादहोरात्रैर्यद्वः क्रव्यादिति जपेत्। इतिहासपुराणधर्मशास्त्राणि च ॥

**बौधायनः** [२, १४, ५]

रक्षोघ्नानि च सामानि स्वधावन्ति यजूंषि च।
मध्वृचोऽथ पवित्राणि श्रावयेदाशयन् शनैः ॥

'रक्षोघ्नानि च सामानि' 'यद्वा उ विश्वपति' इत्यादि ऋच्युत्पन्नानि। 'स्वधावन्ति यजूंषि च' 'पितृभ्यः स्वधाविभ्यः' इत्यादि। 'मध्वृचः' 'मधुवाता ऋतायत' इत्याद्याः[1]।

**हारीतः**

यद्यत्पूतं मन्येत पुनन्तु मा पितर इति षोडशपावमानीर्जपेदादितस्त्रीन्। अत्र पितर इति यजुः। नमो वः पितर इति यजुः [2]स्यामान्तम्। मधुवाता ऋतायत[3] इति तिस्रः। पुनन्तु मा पितर[4] इत्यनुवाकः। त्वं सोम प्रचकित इति चैषा

(1) 'रक्षोघ्नोनि सामानि'—'अग्ने रक्षाणो अंहसः' (साम. सं., पूवार्धं., १-१-३); 'अग्ने युक्ष्वाहि ये तव' (सा. सं., पू., १, ३, ४); 'प्रत्यग्ने मिथुना दह यातुधाना (ऋ. सं., ८, ४, ९, ४); 'प्रत्यग्ने हरसा हरः' (सा. सं., पू., १, २, ५, ५); 'न तस्य मा यया च न' (सा. सं., पू., २,१,१,८); शुष्र्यग्ने नवस्य मे' (सा. सं., पू., २, १, १, १०); 'यद्वा उ विश्वपतिः शितः' (सा. सं., पू., २, १, २, ८); अग्निं होतारम्' (सा. सं., पू., ५, २, ३, ९) एतत्सूक्तोत्पन्नानि। 'स्वधावन्ति यजूंषि च', 'सोमाय पितृपीताय स्वधा नमः', [बौ. गृ. सू., १, ९, ८.] इत्यादीनि। 'मध्वृचः'—'मधुवाता' इत्यादीनि त्रीणि [तै. सं., ४, २, ७—९,]। 'पवित्राणि'—'पवमानः सुवर्जनः' [तै. ब्रा., १, ४, ८] [=पावमान्यः] इत्यादीनि। भुञ्जानान् ब्राह्मणान् श्रावयेत् ॥ (गोविन्दस्वामिविवरणे) ॥ 'मध्वृचः', मधुमत्यः ऋचः [ऋ. सं., १, ६, १४] ॥ 'पवित्राणि' पुरुषसूक्तादीनि सूक्तानीति हेमाद्रिः ॥ [१७०१]।

(2) 'स्मान्तं' इति हेमाद्रिपाठः। 'वयं तेषां वशिष्ठा भूयास्म' इत्येतदन्तामिति व्याख्यातम्। [हे. १०७४], 'स्मायान्तं' इति उ.

(3) वाज. सं; १३,१७.

(4) वाज. सं; १२,३७.

पित्र्या संहिता । एतान् जपन् पितॄन्प्रीणाति पितॄणां चास्याक्षयं भवति ॥

'आदितस्त्रीन्' 'पुनन्तु मा पितरः' इत्युपक्रम्य त्रीन् मन्त्रान् सदैव श्राद्धे जपेदित्यर्थः । 'यजुः स्यामान्तम्' 'मधुत्वं स्याम'इत्यन्तम् आश्वलायनसूत्रपठितम् ॥

शङ्खलिखितौ

पवित्राञ्जलिपाणिर्दर्भेष्वासीनो मधु वाता इति जपेत् । पवित्रं धर्मशास्त्रमप्रतिरथश्च मध्ये गायत्रीमनुश्राव्य ॥

'अप्रतिरथं' 'आशुः शिशान' [1]इत्यादि । 'अनुश्राव्य' श्रावयित्वा ॥

मनुः [३, १३२]

स्वाध्यायं श्रावयेत् पित्र्ये धर्मशास्त्राणि चैव हि ।
आख्यानानीतिहासांश्च पुराणानि खिलानि च ॥

'खिलानि' श्रीसूक्तादीनि ।

मत्स्यपुराणे

ब्रह्मविष्णवर्करुद्राणां स्तोत्राणि विविधानि च ।
इन्द्रेशसोमसूक्तानि पावमानीश्च शक्तितः ॥
बृहद्रथन्तरे तद्वज्ज्येष्ठं साम तथा बृहत् ।
[2]तथैव शान्तिकाध्यायं मधुब्राह्मणमेव च[3] ॥

(1) आशुः शिशानो वृषभो न युध्मो घनाघनः क्षोभणश्चर्षणीनाम् । सङ्क्रन्दनोऽनिमिष एकवीरः शतꣳ सेना अजयत् साकमिन्द्रः । इत्यादि, तैत्तरीयसंहिता, ४, ६, ४, १—५.

(2) हेमाद्रिः, १०७९—'मात्स्यपाद्मप्रभासखण्डेषु'

(3) शन्नो वातः पवतामित्यादिः 'शान्तिकाध्यायः' । 'इदं पृथिवीत्यादि' 'मधुब्राह्मणम्' । यदेतन् मण्डलं तपतीत्यादि 'मण्डलब्राह्मणम्' । तथा भुञ्जानानां विप्राणां आत्मनश्चापि यत्प्रीतिकरमितिहासाख्यानादि वीणावेणुध्वन्यादिकं 'तद्वत्' वेदजपवत् श्रद्धापूतेन मनसा तदपि कारयेत् ॥ (हेमाद्रिः १०७५)

मण्डलब्राह्मणं तद्वत् प्रीतिकारि च यत्पुनः ।
विप्राणामात्मनश्चैव तत्सर्वं समुदीरयेत् ॥

ब्रह्मपुराणे

वीणावंशध्वनी वाथ विप्रेभ्यः सन्निवेदयेत् ॥

विष्णुपुराणे [३, १५, ३१–३७]

रक्षोघ्नमन्त्रपठनं भूमेरास्तरणं तिलैः ।
कृत्वा ध्येयाश्च पितरस्त एव द्विजसत्तमाः ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
मम तृप्तिं प्रयान्त्वद्य [1]विद्धदेहेषु संस्थिताः ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
तृप्तिं प्रयान्तु पिण्डेन मया दत्तेन भूतले ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
तृप्तिं प्रयान्तु मद्भक्त्या मयैतत्समुदाहृतम् ॥
मातामहस्तृप्तिमुपैतु तस्य
तथा पिता तस्य पिता तु योऽन्यः ।
विश्वे च देवाः परमां प्रयान्तु
तृप्तिं प्रणश्यन्तु च यातुधानाः ॥
यज्ञेश्वरो हव्यसमस्तकव्य-
भोक्ताऽव्ययात्मा हरिरीश्वरोऽत्र ।
तत्सन्निधानादपयान्तु सद्यो
रक्षांस्यशेषाण्यसुराश्च सर्वे ॥

'मयैतत्समुदाहृत'मिति मन्त्रलिङ्गात् पितॄन् ध्यायता स्तोत्रमेतत्पठनीयं ब्राह्मणभोजनकाले ॥

(1) 'विप्रदेहेषु' इति हेमाद्रिपाठः

[1]वायुपुराणे

सप्तार्चिषं प्रवक्ष्यामि सर्वकामप्रदं शुभम् ।
अमूर्तीनां समूर्तीनां पितॄणां दीप्ततेजसाम् ॥
नमस्यामि सदा तेषां ध्यानिनां योगचक्षुषाम् ।
इन्द्रादीनां जनेतारो दक्षमारीचयोस्तथा ॥
सप्तर्षीणां पितॄणां च तान्नमस्यामि कामदान् ।
मन्वादीनां जनेतॄंश्च[2] सूर्याचन्द्रमसौ तथा ॥
तान्नमस्कृत्य सर्वान् वै पितॄनप्सु दधिष्वपि[3] ।
प्रजापतये कश्यपाय सोमाय वरुणाय च ॥
योगेश्वरेभ्यश्च सदा नमस्यामि कृताञ्जलिः ।
नक्षत्राणां ग्रहाणां च वाय्वग्न्योश्च पितॄंस्तथा ॥
द्यावापृथिव्योश्च तथा नमस्यामि कृताञ्जलिः ।
देवर्षीणां [4]जनेतॄंश्च सर्वदेवनमस्कृतान्[5] ॥
[6]अभयस्य सदा दातॄन् नमस्येऽहं कृताञ्जलिः[7] ।
पितृगणेभ्यः सप्तभ्यो नमो लोकेषु सप्तसु ॥
स्वयम्भुवे नमश्चैव ब्रह्मणे योगचक्षुषे[8] ।
एतदुक्तं तु सप्तार्चिर्देवर्षिगणपूजितम्[9] ॥
पवित्रं परमं ह्येतच्छ्रीमद्रक्षोनिरासनम्[10] ॥

(1) हेमाद्रिः, १०८१—प्रभासखण्ड—ब्रह्माण्डपुराणविष्णुधर्मेषु इति ।
(2) 'जनेतारः' इति हेमाद्रिपाठः; 'च नेतारः' इति श्राद्धप्रकाशः
(3) 'पितॄनप्स्वर्णवेषु च' इति हे ; च नेतारः' इति श्रा. प्र.
(4) 'जनेतारः' इति हे ; श्रा. प्र.
(5) 'सर्वलोकनमस्कृताः' इति हेमाद्रिः, श्रा. प्र.
(6) Line missing in Hemādri's citation.
(7) अत्र हेमाद्रौ [१०८२]—एषोऽर्धः अधिकः—त्रातारो ये च भूतानां नमस्ये तान् पितामहान् ।
(8) 'लोकचक्षुषे' इति हेमाद्रिः [१०८२], श्रा. प्र., [१३१]
(9) ब्रह्मर्षिगणसेवितमिति हेमाद्रिः, श्रा. प्र.
(10) 'रक्षोविनाशनं' इति हेमाद्रिः, श्रा. प्र.

## ॥ २१ ॥

## ॥ अथ श्राद्धोत्तरं कर्म ॥

याज्ञवल्क्यः [१, २४०-२४८]

आतृप्तेस्तु[1] पवित्राणि जप्त्वा पूर्वजपं तथा ॥
अन्नमादाय तृप्ताः स्थ शेषं चैवानुमान्य च[2] ।
तदन्नं प्रकिरेद्भूमौ दद्याच्चापः सकृत् सकृत् ॥
सर्वमन्नमुपादाय सतिलं दक्षिणामुखः ।
उच्छिष्टसन्निधौ पिण्डान् [3]प्रदद्यात्पितृयज्ञवत् ॥
मातामहानामप्येवं दद्यादाचमनं ततः ।
स्वस्तिवाच्यं ततः कुर्यादक्षय्योदकमेव च ॥
दत्त्वा तु दक्षिणां शक्त्या स्वधाकारमुदाहरेत् ।
वाच्यतामित्यनुज्ञातः प्रकृतेभ्यः स्वधोच्यताम् ॥
ब्रूयुरस्तु स्वधेत्युक्ते भूमौ सिञ्चेत्ततो जलम् ।
विश्वेदेवाश्च प्रीयन्तां विप्रैश्चोक्ते इदं जपेत् ॥
दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च ।
श्रद्धा च नो [4]मा व्यगमद्बहुदेयं च नोऽस्त्विति ॥
इत्युक्त्वोक्त्वा प्रिया वाचः प्रणिपत्य विसर्जयेत् ।
वाजेवाज इति प्रीतः [5]पितृपूर्वं विसर्जनम् ॥

(1) तुशब्दात् जप एव स्वयं कार्यः । परिवेषणं तु अन्यकर्तृकमेव । एवं च पत्नीव्यापारोऽपि श्राद्धे संपादितः स्यात् ॥ (विश्वरूपः); तुशब्दात् यथा किंचिदुच्छिष्यते तथा दद्यात् । उच्छेषणस्य दासवर्गभागधेयत्वात् ॥ (मिताक्षरा)

(2) 'अनुमान्य ह' इति विश्वरूपपाठः । 'हशब्दोऽवधारणार्थः'

(3) प्रदद्यात्—'प्रशब्दो मध्यमपिण्डभक्षणप्रतिषेधार्थः' इति विश्वरूपः ।

(4) 'मा विगमत्' इति मिताक्षरापाठः । मा व्यगमदिति विश्वरूपः ।

(5) 'विसर्जनमेव पितृपूर्वम्, अन्यत् सर्वं देवपूर्वमित्यभिप्रायः' (विश्वरूपः)

यस्मिंस्ते [1]संस्रवाः पूर्वं पितृपात्रे निवेशिताः ।
पितृपात्रं तदुत्तानं कृत्वा विप्रान् विसर्जयेत् ॥

'पूर्वजपः' सव्याहृतिगायत्री मधुवाता इत्यादि । 'दद्याचापः सकृत् सकृत्' भोजनसमाप्तौ चुलकार्थं दत्त्वाऽमृतापिधानं तु विप्रेभ्यश्च सकृत्सकृदिति ॥

कात्यायनः [श्राद्धकल्पसूत्र, ३, ७-१८]

तृप्तान्[2] ज्ञात्वाऽन्नं प्रकीर्य सकृत्सकृदपो दत्त्वा पूर्ववद्गायत्रीं जपित्वा [जप्त्वा] मधुमतीर्मधु मध्विति [मधुमती] च। [3]तृप्ताः स्थेति पृच्छति। तृप्ताःस्म इत्यनुज्ञाशेषमन्नमनुज्ञाप्य [4]सर्वमन्नमेकतोद्धृत्योच्छिष्टसमीपे दर्भेषु त्रींस्त्रीन् पिण्डानवनेज्य दद्यात्। आचान्तेष्वित्येके । आचान्तेषूदकं पुष्पाक्षतानक्षय्योदकं[5] च दद्यात्[6] [दत्त्वा] अघोराः पितरः सन्तु सन्त्वित्युक्ते गोत्रं नो वर्धतां वर्धतामित्युक्ते 'दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च। श्रद्धा च नो मा व्यगमद्बहुदेयं च नोऽस्तु' इत्याशिषः प्रतिगृह्य स्वधावाचनीयान् सपवित्रान् कुशानास्तीर्य स्वधां वाचयिष्य इति पृच्छति। वाच्यतामित्यनुज्ञातः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यः वृद्धमातामहेभ्यश्च स्वधोच्यतामिति । अस्तु स्वधेत्युच्यमाने स्वधावचनीयेष्वपो

(1) 'यस्मिंस्तु संस्रवाः पूर्वमर्घ्यपात्रे' इति विश्वरूपः मिताक्षरा च.

(2) 'तृप्तान्' ब्राह्मणान् ज्ञात्वा ब्राह्मणानामग्रतोऽन्नं विकिरेत् इति । ब्राह्मणानामग्रतोऽन्नं प्रकिरेदिति कर्काचार्याः । पङ्क्तिमूर्धन्यस्योत्तरादिग्भागे अरत्निमात्रे विकिरं दद्यादिति हेमाद्रिः ॥

(3) अत्र बहुवचनात्सर्वे प्रष्टव्याः ।

(4) 'सर्वमन्नं' सवप्रकारं माषान्नवर्जं पिण्डपर्याप्तमेकस्मिन् पात्रे उद्धरेत् ।

(5) इदं जलादिदानं दैवे सव्येन, पित्र्ये तु अपसव्येनेति कर्काचार्याः ।

(6) अक्षय्योदकशब्देन दत्तान्नपानादेः आनन्त्यप्रार्थनसंबन्धि जलमभिधीयते । तच्च पितृब्राह्मणेभ्य एवेति कर्कः । सर्वेभ्यो दद्यादिति स्मृत्यर्थसारे ।

निषिञ्चति [ऊर्जमिति][1]। उत्तानं पात्रं कृत्वा यथाशक्ति दक्षिणां दद्यात् [ब्राह्मणेभ्यः]। विश्वेदेवाः प्रीयन्तामिति दैवे वाचयित्वा वाजेवाजेऽवतेति विसृज्य[2]। आ मा वाजस्येत्यनुव्रज्य[3] प्रदक्षिणीकृत्योपविशेत [प्रविशेत्]॥[4]

आश्वलायनगृह्यम् [४, ९, १०-१४]

तृप्तान् ज्ञात्वा मधुमतीः[5] श्रावयेदक्षन्नमीमदन्तेति[6] च। संपन्नं पृष्ट्वा यद्यदन्नमुपभुक्तं ततस्ततः स्थालीपाकेन सह पिण्डार्थमुद्धृत्य शेषं निवेदयेत्। अभिमतेऽनुमते वा

(1) 'ऊर्जमिति'-ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम्। स्वधास्थ तर्पयत मे पितॄन्॥ (वाजसनेयसंहिता, २,३४)-मन्त्रश्चायं समवेतार्थः। अतोऽस्य मातृश्राद्धे 'मातृभ्यः,' 'पितामहीभ्यः' इत्याहुः संख्यासमवेतार्थः॥

(2) "वाजेवाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः। अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः" [वाजसनेयसंहिता, २१,११] इति मन्त्रेण विप्रान् विसर्जयेत्। विसर्जनं तु पितृपूर्वकम्। निमन्त्रणादिपदार्थजातं देवपूर्वं भवति। विसर्जनं तु पितृपूर्वकमिति मेधातिथिः॥

(3) "आ मा वाजस्य प्रसवो जगम्या देवे द्यावापृथिवी विश्वरूपे। आ मा गन्ता पितरो मातरा च मा सोमो अमृतत्वेन गम्यात्॥ वाजिनो वाजजितो वाजꣳ ससृवाꣳसो बृहस्पतेर्भागमवजिघ्रत निमृजानाः॥" (वाजसनेयसंहिता,९,१९) इति मन्त्रेण विप्रान् विसर्जयेत्। इति मन्त्रेण अनुव्रज्य अनु पश्चात् द्विजान् सीमान्तं गत्वा प्रदक्षिणीकृत्य स्वगृहं प्रविशेत्॥ [गदाधरभाष्यादुद्धृतम्]

(4) Words in brackets occur in the manuscript, and they either do not occur or occur in a different form in the printed *Srāddha Kalpa Sūtra.*

(5) 'मधुमत्यः' तिस्रः—वाजसनेयसंहिता, १३,२७-२९— मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः॥ मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ रजः। मधु द्यौरस्तु नः पिता॥ मधुमान्नो वनस्पतिर्मधुमाꣳ अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः॥

(6) अक्षन्नमीमदन्त ह्यव प्रिया अधूषत। अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी॥ [वाज. स., ३,५१]।

भुक्तवत्स्वनाचान्तेषु पिण्डान् निदध्यात्। प्रकीर्यान्नमुपवीर्यो स्वधोच्यतामिति विसृजेदस्तु स्वधेति वा ॥

'स्थालीपाकेन सह' इत्यभिधानात् केवलाऽऽवसथ्याग्निमन्तः पिण्डपितृयज्ञार्थं स्थालीपाकं श्रपयित्वान्नदानान्तं श्राद्धं निर्वर्त्य स्थालीपाकस्याग्रेणऽग्नौकरणहोमं कृत्वा ब्राह्मणान् भोजयित्वा श्राद्धशेषान्नेन स्थालीपाकान्नमेकीकृत्य पिण्डप्रदानं कर्तव्यम् । 'अभिमते' श्राद्धभोक्त्रा स्वीकृते । 'अनुमते' तेनैव इष्टैः सह भुज्यतामित्यनुज्ञाते ॥

शङ्खलिखितौ

गायत्रीमनुश्राव्य तृप्तान् ज्ञात्वा स्वदितमिति पृष्ट्वा शेषमन्नमनुज्ञाप्य प्रकृतादन्नविकिरं [2]कुर्यात्। स्वधां वाचयित्वा विष्टरांस्त्रीन् निदध्यात्। त्रीण्येवोदपात्राणि सतिलानि सपवित्राणि मृन्मयाश्ममयौदुम्बराणि वा धूपगन्धमाल्यादर्शदीपाञ्जनादीनि चोपहरेत्। सर्वान्नप्रकारमादाय पिण्डान् निदध्यात्। [3]अपसव्येन पाणिना दक्षिणं पाणिमुपधार्यैकैकं त्रिभिरभिमन्त्र्यासावेतत्त इति दर्भेषु तेष्वेव पाणी प्रमृज्योदपात्रैः परिश्राव्य ब्रूयाद्दातारः सन्त्विति बहुदेयं च नोऽस्त्विति ॥

यमः

ततो भुक्तवतां शेषादन्नशेषं निवेदयेत् ।
यथा ब्रूयुस्तथा कुर्यादनुज्ञातस्तु तैर्द्विजैः ॥
तृप्तानाचामयेत्पृष्ट्वा वै ददाति प्रयत्नतः ।
आचान्ताननुजानीयादभिवाद्य कृताञ्जलिः ॥

(1) अन्नाद्विकिरमिति हेमाद्रिपाठः (१४०६)
(2) हेमाद्रिः, १४०६
(3) हेमाद्रिः, १४३२

भवन्तो रमतामत्र ज्ञात्वाऽनुज्ञातलक्षणम् ।
स्वधेति चेति वक्तव्यं प्रीयन्तां पितरस्त्विति ॥
अक्षय्यमन्नपानं च वाच्यं प्रीतैर्द्विजातिभिः ।
ततो निर्वपणं कुर्यात् पिण्डानां तदनन्तरम् ॥
शुचौ देशे विविक्ते च प्रयत्नेनोपपादयेत् ।
विष्टरांस्त्रीन् वपेत्तत्र नामगोत्रसमन्वितान् ॥
अद्भिरभ्युक्ष्य विधिवत्तिलैरभ्यवकीर्य च ।
ततो दर्भेषु तं हस्तं निर्मृज्याल्लेपभागिनाम् ॥
ततः पानीयकुम्भेन तर्पयेत् प्रयतः पितॄन् ।
पूर्वपिण्डं प्रयच्छेत्तु पित्र्यं च पृथिवीति च ॥
पितामहाय त्वपरमन्तरिक्षे च दापयेत् ।
प्रपितामहाय च ततस्तृतीयं तु निवेदयेत् ॥
द्यौर्दर्विरिति मन्त्रेण श्रुतिरेषा सनातनी ।
ततोऽभिवाद्य प्रणतो वरान् याचेत् पितामहान् ॥
दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च ।
श्रद्धा च नो मा व्यगमद्बहुदेयं च नोऽस्त्विति ॥

'पृष्ट्वा वै ददाति प्रयत्नत' इत्यनेनेदमुच्यते शेषान्नानुज्ञापनं न वाङ्मात्रेण, किन्तु तद्दाने प्रयत्नमपि स्वयं कुर्यादिति। 'ददाति'रत्रार्थपरः, तिष्ठन् होमान् यजत इतिवत् । 'ज्ञात्वा अनुज्ञातलक्षणं' अभिरताः स्मेत्यऽनुज्ञासूचकं चिह्नम् ॥ 'विष्टरान्' पिण्डासनकुशान् । 'वपेत्तत्र' पिण्डानिति शेषः । 'लेपभागिनां' प्रपितामहात्परेषाम् ॥

बृहस्पतिः [श्राद्ध., १०६–१०८, १०४, १०५, १२९, १०९]

[1]पृच्छेत्तृप्तास्ततस्ते तु यद्ब्रूयुस्तत्समाचरेत् ।
तत्समीपे प्रकुर्याच्च पिण्डनिर्वपणं ततः ॥

(1) 'पृच्छेद्विप्रान्' इति हेमाद्रिः, १३९१

सर्वस्मात् प्रकृतादन्नात् पिण्डान् मधुतिलान्वितान् ।
पितृमातामहादीनां दद्याद् गृह्यविधानतः ॥
दीपगन्धैर्माल्यधूपैस्तथा वस्त्राञ्जनादिना ।
समभ्यर्च्योदपात्रं च तेषामुपरि निक्षिपेत् ॥
उपस्पृष्टोदकानां तु ब्राह्मणानां ततोऽग्रतः ।
सोदकं विकरेदन्नं मन्त्रं चेमं समुच्चरेत् ॥
अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥
वाजे वाज इति प्रोक्त्वा ब्राह्मणांस्तान् विसर्जयेत् ।
विप्रान् प्रदक्षिणीकृत्य विप्राणां प्रार्थयेद्वरान् ॥
दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च ।
श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्त्विति ॥

हारीतः

तृप्तान् स्वदितमिति पृच्छेत् स्वदितमिति प्रत्याहुः । शृतमिति दैवेष्वायुष्यमिति स्वैरेष्वाऽऽचान्तेषु भूमौ विकिरं निनयेत् । [1]प्रत्याचान्तेषु समूलतिलैर्ब्राह्मणपाणिषु निनयेत् । ओं स्वधेत्याहुरस्तु स्वधेति प्रत्याहुः । ततोऽनुज्ञावचनमभिरम्यतामित्येके । अभिरताः स्मेति प्रत्याहुः । वाजेवाज इत्यभिव्रज्य शेषस्य पिण्डान् पितृयज्ञवन्निदध्यात्[2] । परिषेचनमभिषेचनमुदकाञ्जलिमर्घ्यभाजनमर्घ्यप्रत्यवनेजनं मार्जनप्रवाहनं विकिरोदकं समूलतिलैर्यच्चान्यत्तूष्णीं तद्दशममेकादशकं श्राद्धसमृद्धिकामः कुर्यात् ॥

'शृतमिति दैवेषु'—

देवानुद्दिश्य यच्छ्राद्धं तत्तु दैविकमुच्यते ।
हविष्येन विशिष्टेन सप्तम्यादिषु यत्नतः ॥

(1) हेमाद्रिः, १३९५
(2) हेमाद्रिः, १४९८

इति भविष्यपुराणोक्तं दैवश्राद्धम्, तत्र श्रुतमिति पृच्छेत्। 'श्रुतं' सिद्धम्। 'श्रुतं पाक' इति निपातनात्। 'स्वैरेषु' "श्राद्धं प्रति रुचिश्चैव" इति कथितश्राद्धेषु। 'समूलतिलैः' समूला अत्र कुशाः, तेन समूलकुशतिलैः सह। 'निनयेत्' जलमिति शेषः। 'ततोऽनुज्ञावचनं' कार्यमिति शेषः। तच्च यथारुचि स्थीयतामित्यादि। 'अभिरम्यतामित्येके' एकेऽभिरम्यतामित्यनुज्ञावचनशब्देन नियमं मन्यन्ते॥

पुनर्हारीतः

श्वश्र्वादीनां[1] तथा पत्नी पिण्डान् दद्यात् सुयन्त्रिता।
उदकाञ्जलिदीपं च अञ्जनाभ्यञ्जनं तथा॥

'श्वश्र्वादीनां' इति-यत्र शाखायां मातृप्रभृतीनां पृथक्त्वेन पिण्डप्रदानं विहितं तत्र यजमानत्वादमन्त्रवत्। इदं स्त्रीभ्यः पिण्डदानं केषाञ्चिदेव शाखिनाम्॥

शाङ्खायनगृह्यम् [४,१,९-९]

भुक्तवत्सु पिण्डान् दद्यात्। पुरस्तादेके। पिण्डान् पश्चिमेन तत्पत्नीनां किञ्चिदन्तर्धाय। ब्राह्मणेभ्यः शेषं निवेदयेत्। अग्नौकरणादि पिण्डपितृयज्ञेन कल्पे व्याख्यातम्॥

'पुरस्तात्' ब्राह्मणभोजनात् प्राक्। 'एके' अयं च भेदः शाखाभेदव्यवस्थितः। 'पिण्डान् पश्चिमेन' पित्रादिपिण्डानां पश्चिमप्रदेशे अनतिदूरे किञ्चिदन्तर्धायकं कृत्वा। 'अग्नौकरणादि पिण्डपितृयज्ञेन' अग्नौकरणादीतिकर्तव्यतावता पिण्डपितृयज्ञेन॥

(1) 'स्वस्रादीनां' इति हारीतधर्मशास्त्रमातृकायाम्।

निगमः

तृप्तेष्वामन्त्र्य तृप्ताः स्थेति पूर्ववन्निषिच्य पूर्वेषां स्वस्तिवाच्य ओं स्वधोच्यतामित्युक्त्वाऽभिरम्यतां यथा सुखमिति च संपूज्याऽनुव्रजेत् ॥

'पूर्ववन्निषिच्य' प्रत्यवनिज्य । 'स्वस्तिवाच्य' स्वस्तीति वाचयित्वा ॥

उशना

तृप्तांश्चेमान् प्रभूतं प्रभूतमित्युक्तवतस्सदक्षिणेन तिलोन्मिश्रितोदकेन च सिच्य त्रीन् पूर्वाननुकीर्तयेत् । दर्भास्तीर्णायां भूमौ पिण्डान् निवेदयेत् । ततः स्वधां वाचयेत् । पिण्डानवधार्य तोयेन प्रतिषिच्योदकभाजनान्युत्सृजेत् ॥

'सदक्षिणेन' दक्षिणाद्रव्यसहितेन । 'प्रतिषिच्य' प्रत्यवनिज्य ॥

'अदत्सु ब्राह्मणेषु' इत्यनुवृत्तौ विष्णुः [७३, १७-२८, ३२]

उच्छिष्टसन्निधौ दक्षिणाग्रेषु दर्भेषु पृथिवी दर्विरक्षितेत्येकं पिण्डं पित्रे निदध्यात् । अन्तरीक्षं दर्विरक्षितेति द्वितीयं पितामहाय । द्यौर्दर्विरक्षितेति तृतीयं प्रपितामहाय । येऽत्र पितरः प्रेता इति वासो देयम् । वीरान्नः पितरो धत्त इत्यन्नम् । अत्र पितरो मादयध्वं[1] यथाभागं दर्भमूले स्वकराभिवर्षणम् । ऊर्जं वहन्तीरित्यनेन सोदकेन प्रदक्षिणं पिण्डानां विकिरणं कृत्वाऽर्घपुष्पधूपानुलेपनान्नादिभक्ष्याणि निवेदयेत् । उदकपात्रं मधुघृततिलैः संयुक्तं च[2] । भुक्तवत्सु ब्राह्मणेषु तृप्तिमागतेषु मा मे क्षेष्टेत्यन्नं सतृणमभ्यु-

(1) 'यथाभागमावृषयध्वमिति दर्भमूले करावघर्षणम्' इति मुद्रितविष्णुस्मृति पाठः । 'करावघर्षणं' करलेपावघर्षणमिति वैजयन्ती ।

(2) चकाराद् अञ्जनाभ्यञ्जनादीनि (वैजयन्ती) ।

क्ष्याऽन्नविकिरणमुच्छिष्टाऽग्रतः कृत्वा तृप्ता भवन्तः संपन्नमिति च पृष्ट्वोदङ्मुखेष्वाचमनादौ दत्त्वा ततः प्राङ्मुखेषु [दत्वा ततश्च संप्रोक्षितमिति श्राद्धदेशं संप्रोक्ष्य दर्भपाणिः सर्वं कुर्यात्। ततः प्राङ्मुखाग्रतो]यन्मे राम[1] इति प्रदक्षिणं कृत्वा प्रत्येत्य च यथाशक्ति दक्षिणां च दत्त्वा[2]ऽभिरमन्तु भवन्त इत्युक्त्वा तैरुक्तोऽभिरताः स्म इति देवाश्च पितरश्चेति [अभि]जपेत्। अक्षय्योदकं[च]नामगोत्राभ्यां दत्त्वा विश्वेदेवाः प्रीयन्तामिति च प्राङ्मुखेभ्यस्ततः प्राञ्जलिरिदं तन्मना याचेत।

दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च।
श्रद्धा च नो मा व्यगमद्बहुदेयं च नोऽस्त्विवति[3] ॥
वाजे वाज इति ततो ब्राह्मणांश्च विसर्जयेत्[4]।
पूजयित्वा यथान्यायमनुव्रज्याभिवाद्य च ॥

'यन्मे राम इति' यन्मे रामः शकुनिरित्यादिको मन्त्रः॥

मनुः [३, २१४-२२०; २२३]

अपसव्यमग्नौ कृत्वा सर्वमावृत्परिक्रमम्।
अपसव्येन हस्तेन निर्वपेदुदकं शुचि[5] ॥

(1) 'रामः' काकः । 'रामः शकुनिरिति' देवपालकृतकाठकगृह्यसूत्रभाष्ये (२३०)

(2) 'दक्षिणाभिः समभ्यर्च्य' इति मुद्रित. वि. स्मृ; १६५

(3) मु. वि. स्मृ. अधिकपाठो दृश्यते—"तथास्त्विति ब्रूयुः।
अन्नं च नो बहु भवेदतिथींश्च लभेमहि।
याचितारश्च नः सन्तु मा च याचिष्म कंचन ॥
इत्येताभ्यामाशिषः प्रतिगृह्य।

(4) आसीमान्तमनुव्रज्य विसर्जयेत् (वैजयन्ती)

(5) 'भुवि' इति मुद्रितकोशाः ॥ 'सर्व'ग्रहणादन्यदपि परिवेषणादि अपसव्येन कर्तव्यम् ॥ उदकं शनैरिति पाठः [मेधातिथिः, ३,२०४]

त्रींस्तु तस्माद्धविःशेषं पिण्डान् कृत्वा समाहितः ।
औदकेनैव विधिना निर्वपद्दक्षिणामुखः ॥
न्युप्य पिण्डांस्ततस्तांस्तु प्रयतो विधिपूर्वकम् ।
तेषु दर्भेषु तं हस्तं निर्मृज्याल्लेपभागिनाम्[1] ॥
आचम्योदक्परावृत्य त्रिराचम्य शनैरसून् ।
षड्‌तूंश्च नमस्कुर्यात् पितॄनेव च मन्त्रवित् ॥
उदकं निनयेच्छेषं शनैः पिण्डान्तिके पुनः ।
अवजिघ्रेच्च तान् पिण्डान् यथा न्युप्तान् समाहितः ॥
पिण्डेभ्यः स्वल्पिकां मात्रां समादायानुपूर्वशः ।
तानेव विप्रानासीनान् विधिवत्पूर्वमाशयेत् ॥
तेषां दत्त्वा तु हस्तेषु सपवित्रं तिलोदकम् ।
तत्पिण्डाग्रं प्रयच्छेत्तु स्वधैषामस्त्विति ब्रुवन् ॥

'अपसव्यं' अप्रदक्षिणं यथा भवति। 'आवृत्परिक्रमः' 'अपसव्येन' [2]दक्षिणेनैव। 'निर्वपेत्' निक्षिपेत्, पिण्डार्थीस्तृतकुशेष्विति शेषः। 'शुचि' अनुपहतम्। 'तस्मात्' हविःशेषादग्नौकरणहोमावशिष्टात् । 'औदकेनैव विधिना' अवनेजनोदकदानप्रकारेण। 'न्युप्य' दत्त्वा । 'विधिपूर्वकं' स्वगृह्योक्तविधिप्रकारयुक्तम् । 'उदक्परावृत्य' उदङ्मुखीभवितुं परावर्तनं कृत्वा। 'मन्त्रवत्' 'नमो वः पितरो रसाय' इत्यादिमन्त्रयुक्तम्। 'निनयेत्' दद्यात्। 'शेषं' प्रथमावनेजनावशिष्टं ब्राह्मणार्चनानन्तरम् ॥

देवलः

अथ संगृह्य कलशं सदर्भं पूर्णमम्भसा ।
पुरस्तादुपविश्यैषां पिण्डावापं निवेदयेत् ॥

(1) पिण्डेष्वनुवर्त्यमानेषु अन्नरस ऊष्मावसंपर्कात् संक्रामति हस्ते, स एव 'लेप' उच्यते । (मेधातिथिः)

(2) 'दक्षिणेन पितृतीर्थेन' इति गोविन्दराजः

ततस्तैरभ्यनुज्ञातो दक्षिणां दिशमेत्य सः[1]।
उपलिप्ते शुचौ देशे स्थानं कुर्वीत सैकतम् ॥
मण्डलं चतुरश्रं वा दक्षिणावनतं महत्[2]।
एकदर्भेण तन्मध्यमुल्लिखेत् त्रिश्च तं त्यजेत्[3] ॥
तस्मिन्स्थाने ततो दर्भानेकमूलान् शिवान् बहून्।
दक्षिणाग्रानुदक्पादान् सर्वांस्तांस्तृणुयात्समम्[4] ॥
अथ साञ्जलिरुत्थाय स्थित्वा चावाहयेत् पितॄन्।
पितरो मे प्रसीदन्तु प्रयान्तु च पितामहाः ॥
इति संकीर्तयंस्तूष्णीं तिष्ठेत् क्षणमनुच्छ्वसन्।
आवाहयित्वा दर्भाग्रैस्तेषां स्थानानि कल्पयेत् ॥
तेष्वासीनेषु पात्रेषु प्रयच्छेन्मार्जनोदकम्।
[5]पुष्पाणि विकिरेत्तत्र नानावर्णांस्तिलानपि ॥
ततश्चरुमुपादाय सपवित्रेण पाणिना।
चतुर्धा विभजेत् पिण्डान् घृताक्तान् भाजनेन वै ॥
अभ्यज्य मधुसर्पिर्भ्यां तान्वपेत्[6] कुशसश्चये।
छायायां हस्तिनो छाये बस्तदौहित्रसन्निधौ ॥
पितृपूर्वं च नामानि त्रयाणां कीर्तयेच्छनैः।
अपसव्यमपाङ्गुष्ठं मन्त्रपूर्वं स्वधेति च ॥
एतत्ते तत ये च[7] त्वामन्वित्याद्यावपेत् पितुः।
तथा पितामहस्यापि तत्पितुश्च तथाचरेत्[8] ॥

(1) हेमाद्रिः, १४१२
(2) हे, १४१३
(3) हे, १४१४
(4) हेमाद्रिः, १४१८—'स्तृणुयात्' विस्तारयेत्।
(5) 'प्रक्षाल्य विकिरेत्तत्र' इति हेमाद्रिपाठः (१४२१)
(6) 'वपेत्' निदध्यात् (हे, १४२७)
(7) 'त्वामन्वित्यावापयेत्पितुः' इति हेमाद्रिपाठः (१४३७)
(8) 'तथा वपेत्' इति हे.

सामान्यमिति शेषाणां चतुर्थं पिण्डमावपेत् ।
एवं निवेद्य पिण्डांस्तानलंकुर्याच्च पूर्ववत्[1] ॥
अलंकृत्य यथाकल्पं जुहुयात् पावकं बुधः ।
हविर्भिः कव्यमन्त्रेण स्वधाकारं च घोषितम् ॥
हुत्वैवमग्निपिण्डानां सन्निधौ तदनन्तरम् ।
[2]पक्वान्नेन बलिं तेभ्यः पिण्डेभ्यो वापयेद्द्विजः ॥
ततो दत्तबलिभ्यश्च पिण्डेभ्यो मन्त्रपूर्वकम् ।
पिण्डपात्रेण तेनैव दद्यादाचमनोदकम् ॥
[3]हविःशेषं ततो मुष्टिमादायैकैकमादितः ।
क्रमशः पितृपत्नीनां पिण्डनिर्वपणं चरेत् ॥
ततः पिण्डमुपादाय हविषः संस्कृतं महत् ।
ज्ञातिवर्गस्य सर्वस्य सामान्यमिति निर्वपेत् ॥
दक्षिणां सर्वभोगांश्च प्रतिपिण्डं प्रदापयेत् ।
भक्ष्यानपूपानिक्षूंश्च व्यञ्जनान्यशनानि च ॥
ततश्च पिण्डपात्रेण समुद्धृत्य तिलोदकम् ।
पिण्डांस्तांस्त्रिः परिक्रामेदजस्रमपसव्यतः ॥
ततोऽभिवाद्य प्रयतो वरं याचेत्ततः पितॄन् ।
वंशो नो वर्धतां भूयो बहुदेयं च नोऽस्त्विति ॥
एकोद्दिष्टेऽन्यमासे वा तथा संवत्सरेऽपि च ।
विधानं चैतदेव स्यात् पिण्डश्चैकोऽत्र पूज्यते ॥
एवं पिण्डान् समभ्यर्च्य हुत्वा चाग्निं यथाविधि ।
अभ्येत्य ब्राह्मणस्थानं ब्राह्मणांस्तान् समर्चयेत् ॥
अथ पिण्डावशिष्टान्नं विधिना भोजयेद्द्विजान् ।

'एषां' श्राद्धोपवेशितब्राह्मणानाम् । 'दक्षिणादिक्' श्राद्धकर्त्रपेक्षया । 'एत्य' प्राप्य । 'सैकतं' वालुकामयम् ।

(1) हेमाद्रि', १४७१
(2) हेमाद्रिः, १४७१
(3) हेमाद्रिः, १४४६

'त्रिः' वारत्रयम्। 'तं' दर्भम्। 'एकमूलान्' एकमूलसंलग्न-बहुशिखान्। 'उदक्पादान्' उदङ्मूलान्। 'समं' एककालम्। 'तेषां' पितॄणाम्। 'स्थानानि कल्पयेत्' आस्तृतदर्भोपरीति शेषः। 'मार्जनोदकं' अवनेजनोदकम्। 'बस्तः' छागः। 'अपाङ्गुष्ठं' अपगताङ्गुष्ठसंबन्धम्। 'एतत्ते तत' इति पित्रादिपदं सम्बोधनान्तं प्रयोक्तव्यम्। 'शेषाणां' वृद्धप्रपितामहादीनाम्। 'पूर्ववत्' ब्राह्मणार्चनवत्। 'कव्यमन्त्रेण' अग्नये कव्यवाहनायेत्यादिमन्त्रेण। 'घोषितं' उच्चैरुच्चारितम्, कुर्यादिति शेषः। 'आचमनोदकं' प्रत्यवनेजनोदकम्। 'ततश्च' इति, ततः सतिलोदकधारणं वारत्रयमपसव्यं पिण्डान् वेष्टयेत्यर्थः। इदं च मनुदेवलाभ्यां पिण्डविधानं ब्राह्मण-भोजनात् पूर्वमुक्तमपि पिण्डप्रकरणानुरोधेनात्र लिखितम्॥

शङ्खः

उच्छिष्टसन्निधौ कार्यं पिण्डनिर्वपणं बुधैः।
आदौ वापि तथा कुर्यादग्निकार्यं यथाविधि॥
यत्किञ्चित्पच्यते गेहे भक्ष्यं वा भोज्यमेव वा।
अनिवेद्य न भोक्तव्यं पिण्डमूले कथञ्चन॥
भोजयित्वा यथाभक्त्या आचान्तान् दत्तदक्षिणान्।
स्वस्ति वाच्य प्रसन्नात्मा अनुव्रज्य विसर्जयेत्॥

'अनिवेद्य न भोक्तव्यम्' इति सर्वमन्नमुपक्लृप्तं पिण्ड-बलित्वेन विनिवेदयेदित्यर्थः। 'पिण्डमूले' पिण्डसमीपे॥

[1]मनुर्विष्णुश्च प्रथमे

सार्ववर्णिकमन्नाद्यं सन्नीयाप्लाव्य वारिणा।
समुत्सृजेद्भुक्तवतामग्रतो विकिरेद्भुवि[2]॥

(1) विष्णुः, ८१,२१; मनुः, ३, २४४; २५१–२५४; २५८–२५९
(2) 'विकिरन्भुवि' इति मु. पाठः,

पृष्ट्वा स्वदितमित्येवं तृप्तानाचामयेत्ततः ।
आचान्तांश्चाऽनुजानीयादभि भो रम्यतामिति ॥
स्वधाऽस्त्वित्येव ते ब्रूयुर्ब्राह्मणास्तदनन्तरम् ।
स्वधाकारः परा ह्याशीः सर्वेषु पितृकर्मसु ॥
ततो भुक्तवतां तेषामन्नशेषं निवेदयेत् ।
यथा ब्रूयुस्तथा कुर्यादनुज्ञातो द्विजोत्तमैः ॥
पित्र्ये स्वदितमित्येव वाक्यं गोष्ठे तु सुश्रुतम् ।
संपन्नमित्यभ्युदये दैवे रो[illegible] इत्यपि[1] ॥
विसृज्य ब्राह्मणांस्तांस्तु नियतो वाग्यतः शुचिः ।
दक्षिणां दिशमाकाङ्क्षन् याचेतेमान् वरान् पितॄन् ॥
दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च ।
श्रद्धा च नो मा व्यगमद्बहुदेयं च नोऽस्त्विति ॥

'सार्ववर्णिकं' सर्वमुपक्लृप्तम् । 'सन्नीय' मिश्रयित्वा । 'आकाङ्क्षन्' निरीक्ष्यमाणः ॥

वसिष्ठः [३, ६९-७१।

रोचत इति सायंप्रातरशनान्यभिपूजयेत् । स्वदितमि[illegible] पित्र्येषु । संपन्नमित्याभ्युदयिकेषु ॥

देवलः

एवं तृप्तेषु पानीयं दद्यादाचमनं तथा ।
उच्छिष्टं चाप्यपनयेत् पित्र्याणां नाम वर्जयेत् ॥
ततः सर्वाशनं पात्रे गृहीत्वा विधिवत् स्वयम् ।
तेषामुच्छेषणस्थाने तेन पात्रेण निक्षिपेत् ॥
आचान्तेभ्यो द्विजेभ्यश्च प्रयच्छेदथ दक्षिणाम् ।
हिरण्यरत्नभोगानामन्येषां च स्वशक्तितः ॥

(1) गोभिलसांख्यायनौ—'स्वदितमिति तृप्तिप्रश्नः' इत्याहतुः, । मेधातिथि-गोविन्दराजौ तु श्राद्धकालगतेनान्येनापि स्वदितमित्येव कर्तव्यमिति व्याचक्षतुः । श्राद्धे स्वदितमित्येतद्वाच्यमन्येन केनचित् । नानुरुद्धमिदं विद्वद्वृद्धैर्न श्रद्धीम हि ॥ इति कुल्लूकः

ततो मुष्टिमुपादाय हविषोऽन्तस्ततः स्वयम् ।
कलशं जलपूर्णं च गृहीत्वोभयमेव च ॥
पितॄणां ब्राह्मणानां च हस्ताग्रात् प्रभृति क्षरन् ।
अपसव्यं क्रमेत् सर्वान् तांश्च पिण्डान् बहिर्मुखः ॥
त्रिरेवंपतनं तोयं परीत्य श्रावयेच्छनैः ।
परिक्रम्य तु तत्पात्रं तत्रैवाप्यवकुब्जयेत् ॥
अथ वै वैश्वदेवत्यान् ब्राह्मणान् स्वस्ति वाचयेत् ।
अक्षयं वाचयेत् पित्र्यांश्चरमं सतिलोदकम् ॥
अथ विप्रान् गृहीतार्थान् संतृप्तानभिवादयेत् ।
यथावद्वैश्वदेवत्यान् पितृपूर्वं पुनः पितॄन् ॥
पूर्वमुत्थापयेत् पित्र्यान्भ्यतामिति च ब्रुवन् ।
उत्थिताननुगच्छेच्च तेभ्यः शेषं च संहरेत् ॥
पश्चात्तु वैश्वदेवत्यान् विप्रानुत्थापयेत्तथा ।
एते हि पूर्वमासीनाः समुत्तिष्ठन्ति पश्चिमाः ॥

'पानीयं' भोजनान्ते अमृतापिधानमशनीयम् । 'एवं-पतनं' एवमुक्तप्रकारं पतनं यस्य तत्तथा । 'चरमं' पश्चात् ॥

ब्रह्मपुराणे

उच्छिष्टे सतिलान् दर्भान् दक्षिणाग्रान्निधापयेत् ।
यद्यन्निवेदितं किञ्चित् पितृभ्यश्चाथ तत्र च ॥
तस्मात्तस्माच्च तद्भागं गृहीत्वा च समे शुभे ।
दत्त्वाऽमृतापिधानं तु विप्रेभ्यश्च सकृत् सकृत् ॥
कच्चित् संपन्नमेतन्मे भो विप्रा इति तान् वदेत् ।
इति प्राहुः सुसम्पन्नं तांस्तान् पुनरुदाहरेत् ॥
अहो भवन्तस्तृप्यन्तु तृप्ताः स्मेति वदन्ति ते ।
स तानाह पुनः शेषं क्व देयं चान्नमित्यपि ॥
शिष्टेभ्यो दीयतां चैतदिति तं प्रवदन्ति ते ।
अथ तृप्तांस्तु तान् ज्ञात्वा भूमावन्नं जलं क्षिपेत् ॥

येऽस्मत्कुलेजा पितरो लुप्तपिण्डोदकक्रियाः ।
ये चाप्यकृतचूडास्तु ये च गर्भाद्विनिःसृताः ॥
येषां दाहो न क्रियते येऽग्निदग्धास्तथाऽपरे ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥
ततः प्रक्षाल्य हस्तौ तु तथाचम्य हरिं स्मरेत् ।
प्रेतभागं विसृज्याथ प्रायश्चित्तोपशान्तये ॥
सव्याहृतिं सप्रणवां गायत्रीं च ततो जपेत् ।
पठेन्मधुमतीः पुण्यास्तथा च मधु मध्विति ॥

'उच्छिष्टे' उच्छिष्टसन्निधौ । 'प्रायश्चित्तोपशान्तये' प्रायश्चित्तसाध्या या उपशान्तिः, तस्यै तथा ॥

तत्र दक्षिणपूर्वस्यां कार्या वेदी तथा दिशि ।
हस्तमात्रावाह्यभूमेश्चतुरङ्गुलमुच्छ्रिता ॥
पिण्डनिर्वापणार्थाय रमणीया विशेषतः ।
ओं निहन्मि सर्वं यदमेध्यवद्भवे-
द्धताश्च सर्वेऽसुरदानवा मया ।
यक्षाश्च रक्षांसि पिशाचसङ्घा
हता मया यातुधानाश्च सर्वे ॥
अनेन मन्त्रेण सुसंयतात्मा
वेदीं च सर्वां सकृदुल्लिखेच्च ।
शिवां च बुद्धिं ध्रुवमिच्छमानः
क्षिपेत् कुशांस्तत्र च दक्षिणाग्रान् ॥

तथा

गृहीत्वा दर्भपिञ्जूलीं ततो वामेन पाणिना ।
तया च दक्षिणाग्रां तु रेखामुल्लङ्घयेत् पठेत् ॥
पवित्रपाणिश्च जपन्मन्त्रं रक्षोघ्नमुत्तमम् ।
समूलान् दक्षिणाग्रांस्तु रेखायां प्रस्तरेत् कुशान् ॥

अथ वै चमसादिभ्यस्त्वर्घपात्रेभ्य एव च ।
सपुष्पाञ्जलिमादाय तेषां पृष्ठे पृथक्पृथक् ॥
अप्रदक्षिणं नेनिज्याद्‌गोत्रनामाऽनुमन्त्रितम् ।
अमुकामुकगोत्रैतत्तुभ्यमन्नं स्वधा नमः ॥
अवनेनिक्ष्व इत्यन्ते जपेच्च सुसमाहितः ।
पिण्डांस्तथार्घपात्रेषु त्रिषु दत्त्वा च पूर्ववत् ॥
मध्वाज्यजलसंपृक्तं सर्वव्यञ्जनसंयुतम् ।
उष्णमादाय पिण्डं तु कृत्वा बिल्वफलोपमम् ॥
दद्यात् पितामहादिभ्यो दर्भमूले यथाक्रमम् ।
अमुकामुकगोत्रैतत् तुभ्यं पिण्डेति सञ्जपेत् ॥
ये च त्वामिति मन्त्रस्तु सर्वेभ्यश्च जपेत् पृथक् ।
ततो दर्भेषु विधिवत्संमार्ज्य च करौ ततः ॥
प्रक्षाल्य च जलेनाथ त्रिराचम्य हरिं स्मरेत् ।
तेभ्यः संस्रवपात्रेभ्यो जलेनैवाऽवनेजनम् ॥
दत्त्वात्र पितरश्चेति पठेच्चोदङ्मुखः स्थितः ।
चिन्तयंश्च पितॄंस्तुष्टान् सर्वान् भास्वरमूर्तिकान् ॥
अमी मदन्त पितरस्त्विति पश्यन् धिया पठेत् ।
नीवीं विस्रस्य च जपेन्नमो वः पितरस्त्विति ॥
यथेह पुरुषं तं च मन्त्रं जप्त्वा कृताञ्जलिः ।
एतद्वः पितरो वासस्त्विति जल्पन् पृथक्पृथक् ॥
अमुकामुकगोत्रैतत्तुभ्यं वासः पठेत्ततः ।
दद्यात्क्रमेण वासांसि श्वेतवस्त्रभवा दशाः ॥
गते वयसि वृद्धानि स्वानि लोमान्यथापि वा ।
क्षौमं सूत्रं नवं दद्याच्छाणं कार्पासमेव वा ॥
कृष्णगोर्णानीलरक्ताक्तकौशेयानि विवर्जयेत् ।
मधु साभ्यञ्जनं चार्घं पुष्पं धूपं विलेपनम् ॥
बलिं दद्याच्च विधिवत् पिण्डोऽष्टाङ्गो भवेद्यथा ।

पूजयित्वा तु पिण्डस्थान् पितॄंश्च प्रणमेदृतून् ॥
ओं वसन्ताय नमस्तुभ्यं ग्रीष्माय च नमो नमः ।
वर्षाभ्यश्च शरत्संज्ञऋतवे च नमः सदा ॥
हेमन्ताय नमस्तुभ्यं नमस्ते शिशिराय च ।
माससंवत्सरेभ्यश्च दिवसेभ्यो नमः सदा ॥

'गृहीत्वा दर्भपिञ्जूलीम्' इति, वामहस्तेन दर्भपिञ्जूलीं गृहीत्वा उभाभ्यां हस्ताभ्यामुल्लिखेदित्यर्थः । "सव्योत्तराभ्यां पाणिभ्यां कुर्यादुल्लेखनं द्विजः" इति वायुपुराणवचनात्[1] । 'पठेत् रक्षोघ्नं मन्त्रम्' अपहता इत्यादिकम् । 'तेषां पृष्ठे' पिण्डार्थास्तृतकुशानामुपरि । 'दत्त्वा' निक्षिप्य । 'पूर्ववत्' पित्राद्यर्घपात्रेषु । 'यथाक्रमम्' विधिवत्, अपसव्येन मन्त्रवच्च । 'संमार्ज्य' प्रोक्ष्य । 'तेभ्यः' पिण्डस्थपितृभ्यः । 'तेभ्यः संस्रवपात्रेभ्यः' संस्रवपात्रतो जलमादायाऽवनेजनं दत्त्वेत्यर्थः ॥

वायुपुराणे

सव्योत्तराभ्यां पाणिभ्यां कुर्यादुल्लेखनं द्विजः ॥

[2]तथा

निहन्मि सर्वं यदमेध्यवद्भवे-
द्धताश्च सर्वेऽसुरदानवा मया ।
रक्षांसि यक्षाः सपिशाचसङ्घा
हता मया यातुधानाश्च सर्वे ॥
एतेन मन्त्रेण सुसंयतात्मा
[3]वेदीं च सर्वां सकृदुल्लिख्य धीरः ।

(1) Cited by *Viramitrodaya*, Srāddhakāṇḍa, p. 250.
(2) 'ब्रह्मपुराणे' इति हेमाद्रिः, १४१६–१४१७
(3) 'दर्भेण वेदिं सकृदुल्लिखेत्तु' इति हेमाद्रिः

शिवां हि बुद्धिं ध्रुवमिच्छमानः
क्षिपेद्द्विजातिर्दिशमुत्तरान्तः[1] ॥
एवं पित्र्ये दृष्टमेतद्द्विजस्य
तस्यासुरा वर्जयन्तीह श्राद्धम् ।
यस्मिन् देशे पठ्यते ह्येष मन्त्र
स्तं वै देशं राक्षसा वर्जयन्ति ॥

'क्षिपेत्' उल्लेखनसाधनमिति शेषः[2] ॥

तथा[3]

सकृदेवाहरेद्दर्भान् पिण्डार्थं दक्षिणामुखान् ।
प्राग्दक्षिणाग्रान्नियतो विधिश्चाप्यत्र वक्ष्यते ॥
मधुसर्पिस्तिलैर्युक्तांस्त्रीन् पिण्डान् निर्वपेद्बुधः ।
जानु कृत्वा तथा सव्यं भूमौ पितृपरायणः ॥
पिण्डान् परिक्षिपेत् सम्यगपसव्यमतन्द्रितः ।
अन्नेनाद्भिश्च पुष्पैश्च फलैर्भक्ष्यैः पृथग्विधैः ॥
पृथङ्मातामहानां च केचिदिच्छन्ति मानवाः ।
त्रीन् पिण्डानानुपूर्व्येण साङ्गुष्ठान् मुष्टिबन्धनान् ॥
सानुचराणां यत्नेन पृथग्दद्याद्यथाक्रमम् ।
सव्येतराभ्यां पाणिभ्यां वदेन्मन्त्रमिमं सदा ॥
नमो वः पितरस्तुष्टा इत्येवं श्रद्धया पुनः ।
सव्येतराभ्यां पाणिभ्यां प्रथमं पिण्डमावहेत् ॥
नमो वः पितरः सौम्या नित्यमेवमतन्द्रितः ।
उदकस्य च रेखायामुदपात्राऽवसेचनम् ॥

(1) 'दिशमुत्तराङ्गतः' इति हेमाद्रिः, १४१७

(2) Repeated by Hemādri, who adds—'उत्तरां दिशं' क्षेप्यदर्भापेक्षया । अनेन चात्मापेक्षया दक्षिणस्यां दिशि क्षिपेदिति लभ्यते । 'अपहता' इत्यादि मन्त्रान्तरञ्च लेखाकरणे दृश्यते ॥ (१४१७)

(3) 'वायुपुराणे' इति हेमाद्रिः, १४२०—'प्राग्दक्षिणा' आग्नेयी दिक् ।

क्षौमसूत्रं नवं दद्याच्छाणं कार्पासिकं तथा।
पत्रोर्णं पट्टसूत्रं च कौशेयं च विवर्जयेत्॥
वर्जयेच्च दशां प्राज्ञो यद्यप्यहतका भवेत्।
श्रेष्ठमाहुस्त्रैककुदमञ्जनं नित्यमेव हि॥
गृहीत्वा दर्भपिञ्जूलैस्त्रिभिः कुर्याद्यथाविधि।
अपसव्यं पितृभ्यस्तु दद्यादञ्जनमुत्तमम्॥
तैलं कृष्णतिलेभ्यश्च यत्नात्सुपरिरक्षितम्॥

'दक्षिणामुखताप्रागुदक्षिणाग्रतयो'र्विकल्पः। 'परिक्षिपेत्' परिवेष्टयेत्, वक्ष्यमाणतज्जलपुष्पादिना। 'अपसव्यं' अप्रदक्षिणम्। 'दशां च वर्जयेत्' इति श्वेतवस्त्रव्यतिरिक्त दशाविषयम्। "दद्यात् क्रमेण वासांसि श्वेतवस्त्रभवां दशाम्" इति ब्रह्मपुराणवचनात्। 'त्रैककुदं' सौवीराञ्जनम्॥

तथा

पेषयित्वाञ्जनं सम्यग्वेद्या उत्तरतो द्विजः॥

तथा

तैलं पिण्डेन दातव्यं पिण्डस्याभ्यञ्जनं हि तत्।
अञ्जनाभ्यञ्जने गन्धः सूत्रप्रणयनं तथा॥
कौशैः पुनर्भवैः कार्यमश्वमेधफलार्थिना।
एते वै पितरो देवा देवाश्च पितरः पुनः॥
पुष्पगन्धादिधूपानामेषां मन्त्र उदाहृतः।
ब्रूयाच्छ्राद्धे च सावित्रीं पिण्डे पिण्डे समाहितः॥
सोमायेति च वक्तव्यं तथा पितृमतेति च॥

तथा

स्तोतव्या चेह पृथिवी निवापस्य तु धारिणी।
वैष्णवी काश्यपी चैव तथैवेक्ष्वाकवीति च॥
उदकानयने चैव स्तोतव्यो वरुणः प्रभुः।

शातातपः

ब्राह्मणान् भोजयित्वा तु शक्त्या दद्यात्तु दक्षिणाम् ।
अभिप्रेतार्थसिद्ध्यर्थमिष्टान् कामांस्तु वाचयेत् ॥
दीर्घा नदाश्च नद्यश्च विष्णोस्त्रीणि पदानि च ।
एवं चाऽपः प्रसिञ्चानो दीर्घमायुरवाप्नुयात् ॥
अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम् ।
ब्राह्मणस्य करे न्यस्ताः शिवा आपो भवन्तु नः ॥
लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे ।
लक्ष्मीर्वसते सदा गोष्ठे सौमनस्यं सदास्तु मे ॥
अक्षतं चास्तु मे पुण्यं शान्तिः पुष्टिर्धृतिस्तु मे ।
दद्याच्छ्रेयस्करं लोके तत्तदस्तु सदा मम ॥
दक्षिणायां तु सर्वत्र बहु देयं तथास्तु नः ।
प्रतिगृह्याशिषस्तेषां कृत्वा विप्रान् प्रदक्षिणम् ॥
ततः प्रदक्षिणीकृत्य पुनस्तेषां कृताञ्जलिः ।
उक्त्वा चैव प्रियां वाचं प्रणिपत्य विसर्जयेत् ॥
भोजनेऽवतिष्ठमाने स्वस्ति कुर्वन्ति ये द्विजाः ।
तदन्नमसुरैर्भुक्तं निराशाः पितरो गताः ॥

ब्रह्मपुराणे

आचान्तेषूदकं दद्यात् पुष्पाणि शयनानि च ।
यवोऽसीति जपेन्मन्त्रं श्रद्धाभक्तिसमन्वितः ॥
दद्यात्तदक्षयजलं तिलाज्यमधुसंयुतम् ।
सपवित्रान् कुशान् भूमावास्तीर्य सलिलं तथा ॥
ततः संस्रवपात्रेभ्यो जलमादाय चार्चितम् ।
ऊर्जं वहन्तिश्च जपन् पिण्डांश्चाप्यवसिञ्चति ॥
आचम्य प्रयतो भूत्वा मध्यमं चात्र जिघ्रति ।
पत्न्यै प्रयच्छन्ति च तं शेषान् पात्रे निधापयेत् ॥
समूलांस्तान् कुशान् वह्नावाधत्ते तत्तथोल्मुकम् ।

सुवर्णरौप्यपात्राणि मनोज्ञानि शुभानि च ॥
हस्त्यश्वरथयानानि शयनानि गृहाणि च ।
उपानत्पादुकाच्छत्रचामरव्यजनानि च ॥
यज्ञेषु दक्षिणाः पुण्या इति संचिन्तयन् हृदि ।
दरिद्रोऽपि यथाशक्त्या दद्याद्विप्राय दक्षिणाम् ॥

मत्स्यपुराणे

ततश्च स्वधावाचकं विश्वेदेवेषु चोदकम् ।
दत्त्वाऽऽशिषः प्रगृह्णीयाद्द्विजेभ्यः प्राङ्मुखो द्विजः ॥
अघोराः पितरः सन्तु सन्त्वित्युक्तः पुनर्द्विजः ।
गोत्रं तथा वर्धतां नस्तथेत्युक्तश्च तैः पुनः ॥
दातारो नोऽभिवर्धन्तामन्नं चैवेत्युदीरयेत् ।
एताः सत्याशिषः सन्तु सन्त्वित्युक्तश्च तैः पुनः ॥
स्वस्तिवाचनकं कुर्यात् पिण्डानुद्धृत्य शक्तितः ।

तथा

ततस्तानग्रतः स्थित्वा प्रतिगृह्योदपात्रिकाम् ॥
वाजे वाजे इति पठन् कुशाग्रेण विसर्जयेत् ।
बहिः प्रदक्षिणं कुर्यात् पदान्यष्टावनुव्रजेत् ॥
बन्धुवर्गेण सहितः पुत्रभार्यासमन्वितः ॥

महाभारते

श्राद्धापवर्गे विप्रस्य वक्तव्यं स्वदितं भवेत् ।
क्षत्रियस्याप्यथ ब्रूयात् प्रीयन्तां पितरस्त्विति ॥
अपवर्गे तु विप्रस्य श्राद्धकर्मणि भारत ।
अक्षय्यमभिधातव्यं स्वस्ति शूद्रस्य भारत ॥
पुण्याहवाचनं दैवे ब्राह्मणस्य विधीयते ।
एतदेव निरोंकारं क्षत्रियस्य विधीयते ॥
वैश्यस्य चैव वक्तव्यं प्रीयन्तां देवता इति ।

ब्रह्मपुराणे

इच्छन्ति केचिदाचार्याः पश्चात् पिण्डनिवेदनम् ।
पूजनं चैव विप्राणां पूर्वमेवेह नित्यशः ॥
तद्धि धर्मार्थकुशलो नेत्युवाच बृहस्पतिः ।
पूर्वं निवेदयेत् पिण्डान् पश्चाद्विप्रांश्च भोजयेत् ॥

यमः

यदन्नं विशदं नाम क्रियते तर्पितैर्द्विजैः ।
न च नाम्ना तदाख्यातं तच्च भूमौ प्रदीयते ॥
येऽकृतचूडा ये बाला ये च गर्भाद्विनिःसृताः ।
अनूढा या मृताः कन्यास्तेषां भूमौ प्रदीयते ॥
अपां समीपे दर्भेषु सिकतासु च सर्वशः ।
अनेन विधिना दत्तं पितॄणामक्षयं भवेत् ॥

'विशदं' विमलम्, विकिरणयोग्यं कृत्वा भूमौ यद्वि किरेदित्यर्थः । 'तर्पितैर्द्विजैः' इति, 'वत्सरैरमावास्यायाम्' इति वत् काललक्षणा । तेन तर्पितेषु द्विजेष्वित्यर्थः । 'न च नाम्ना तदाख्यातम्' इति, उद्देश्यनामविशेषेणानिर्दिष्टम् ॥ 'अपां समीपे' इत्यादि गुणफलाधिकारः ॥

मनुविष्णू [मनु, ३,२४७–२४६; विष्णु, ८१,२२–२३]

असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम् ।
उच्छिष्टं भागधेयं स्याद्दर्भेषु विकिरश्च यः ॥
उच्छेषणं भूमिगतमजिह्मस्याशठस्य च[1] ।
दासवर्गस्य तत्पित्र्ये भागधेयं प्रचक्षते ॥

(1) 'त्यागिनां' गुर्वादीनाम् । अथ वा 'कुलयोषितां' कुलस्त्रीणां अदृष्टदोषाणां भार्याणां त्यक्तारः स्वतन्त्राः । अन्ये तु कुलयोषितामिति अस्मिन्ननूढाः कन्या कुलयोषित इति व्याचक्षते । (मेधातिथिः ॥) नास्य कार्योऽग्निसंस्कार इत्यादिना निषिद्धाग्निकारिणां मृतानां कुलस्त्रीणां च कुलं त्यक्त्वा गतानां पात्रस्थमुच्छिष्टं दर्भेषु यो विकिरः स भागः स्यात्कुलयोषितामिति विशेषाभिधानं संस्कृतं भैक्षमिदम् ॥ (गोविन्दराजः) भूमिपतितं यदुच्छिष्टं तत् अकुटिलस्यानलसस्य दासस्य भागधेयं भागम् ॥ (गोविन्दराजः)

'त्यागिनां कुलयोषितां' अकारणेन कुलस्त्रीत्यागवताम्। 'उच्छिष्टं' पात्रस्थमसंस्कृतप्रमीतादीनाम्। 'भूमिगतं' 'उच्छेषणं' उच्छिष्टं, 'दासवर्गस्य'। 'पित्र्ये' पितृकर्मणि॥

वसिष्ठः [११,२३-२४]

प्राक्संस्कारात् प्रमीतानां संप्रेष्याणामिति श्रुतिः।
भागधेयं मनुः प्राह उच्छिष्टोच्छेषणे उभे॥
उच्छेषणं भूमिगतं विकिरेल्लेपमौदकम्।
अनुप्रेतेषु विसृजेदप्रजानामनायुषाम्॥

'संप्रेष्याः' दासाः। 'लेपमौदकं' यदन्नोदकदिग्धस्य हस्तस्य दर्भेषु मार्जनम्। 'अनुप्रेतेषु' पित्र्याद्यनुयायिषु मृतेषु मध्ये 'अप्रजानामनायुषां' 'विसृजेत्', 'उच्छेषणं' विकिरणं लेपमौदकं च भागधेयं कल्पयेदित्यर्थः॥

बृहस्पतिः [श्राद्ध, ११०]

अग्नौ हुतेन देवस्थाः पितृस्था द्विजतर्पणैः।
नरकस्थाश्च तृप्यन्ति पिण्डैर्दत्तैस्त्रिभिर्भुवि॥

शातातपः

अग्नौ हुतेन देवस्थाः पितृस्थास्तर्पितैर्द्विजैः।
भूमौ दत्तेन तिर्यक्स्थास्तृप्यन्ति पितरः सदा॥

हारीतः

आयुर्दः प्रथमः पिण्डो द्वितीयः पुत्रदः स्मृतः।
ऋद्धिदस्तु तृतीयो वै तस्मान्मध्यममाशयेत्॥
या पत्नी पुत्रकामा स्यान्मध्यमं पिण्डमश्नुते।
प्राजापत्येन विधिना स तस्याः पुत्रदः स्मृतः॥

'प्राजापत्यो विधिः' 'अपां वौषधीनां रसं प्राशयामि [1]भूतकृतं गर्भं धत्स्व' इति [2]मध्यमं पिण्डं पत्न्यै प्रयच्छति ॥ 'आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथेह पुरुषोऽसदिति तं पत्नी प्राश्नीयात्" इत्यापस्तम्बोक्तेः[3] ॥

यमः

अप्स्वेकं प्लावयेत्पिण्डमेकं पत्न्यै निवेदयेत् ।
एकं च जुहुयादग्नौ त्रयः पिण्डाः प्रकीर्तिताः ॥
यं पिण्डं प्लावयेदप्सु चन्द्रः प्रीणाति तेन सः ।
शशी प्रीणयते देवान् पितॄंश्चैव महायशाः ॥
तथा च मध्यमं पिण्डं पत्नी प्राश्नाति वाग्यता ।
पुत्रकामां सपुत्रां तां कुर्वन्ति प्रपितामहाः ॥
यदेवमपरं पिण्डं जुहोत्यग्नौ द्विजोत्तमः ।
शाश्वतान् प्राप्यते लोकांस्तुष्य सः प्रपितामहैः ॥

'शाश्वतान्' इति, 'प्रपितामहैः' 'तुष्य' परितुष्य, 'शाश्वतांल्लोकान्' 'सः' श्राद्धकर्ता, 'प्राप्यते' लभत इत्यर्थः ॥

मनुः [३,२६७–२६३]

एवं निर्वपणं कृत्वा पिण्डांस्तांस्तदनन्तरम् ।
गां विप्रमजमग्निं वा प्राशयेदप्सु वा क्षिपेत् ॥
पिण्डनिर्वपणं केचित् पुरस्तादेव कुर्वते ।
वयोभिः खादयन्त्येतान्[4] प्रक्षिपन्त्यनलेऽप्सु वा ॥

(1) 'अपामोषधीनां रस इति मधुनः'—आपस्तम्बश्रौतसूत्रम्, १८, १३, १८; 'अपामोषधीनां गर्भं धा', इति तैत्तिरीयसंहिता, ३, ३, ५, १; काठकसंहिता, २, १.

(2) आपस्तम्बश्रौतसूत्रम्, १, १०, १७.

(3) आपस्तम्बश्रौतसूत्रम्, १, १०, ११.

(4) 'स्वादयन्त्यन्ये' इति मेधातिथिप्रभृतीनां पाठः

पतिव्रता धर्मपत्नी पितृपूजनतत्परा ।
मध्यमं तु ततः पिण्डमद्यात् सम्यक् सुतार्थिनी ॥
आयुष्मन्तं सुतं विद्याद्यशोमेधासमन्वितम् ।
धनवन्तं प्रजावन्तं [1]धार्मिकं सात्विकं तथा ॥

'एवं निर्वपणम्' इति, ब्राह्मणभोजनात् प्राक् पिण्डदानपक्षे तिस्रः प्रतिपत्तयो नियताः पक्षिदानादिकाः । 'प्रक्षिपन्त्यनलेऽप्सु वा' इति पूर्वमुक्तयोरपि जलानलयोरनुवादः पक्षिखादनविधानार्थः ॥

बृहस्पतिः [श्राद्ध, १२३, १२५]

पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेषु वा ।
मध्यमं तु ततः पिण्डमद्यात् सम्यक् सुतार्थिनी ॥
अन्यदेशगता[2] पत्नी गर्भिणी रोगिणी तथा ।
तदा तं जीर्णवृषभश्छागो वा भोक्तुमर्हति ॥

अस्यार्थः—सर्वपिण्डानां तावद्गोजलादिगोचरतया प्रतिपत्तिः । मध्यमपिण्डस्य तु यदा वृषेऽजे वा प्रतिपत्तिस्तज्जीर्णे ॥

मत्स्यपुराणे[3]

पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेपि वा ।
विप्रान्ते वाऽपि विकिरेद्वयोभिरथवाऽऽशयेत् ॥
पत्नीन्तु मध्यमं पिण्डमाशयेद्विनयान्विताम् ।
आधत्त पितरो गर्भमन्तः सन्तानवर्धनम् ॥

(1) सात्त्विकं धार्मिकमिति मु. मनुः
(2) 'अन्यदेशस्थिता' इति अपरार्कपाठः [५५०]
(3) अपरार्कः, ५५०

वायुपुराणे[1]

पिण्डमग्नौ सदा दद्याद्भोगार्थी सततं नरः ।
पत्न्यै प्रजार्थं दद्याद्धि मध्यमं मन्त्रपूर्वकम् ॥
उत्तमां गतिमन्विच्छन् गोभ्यो नित्यं प्रयच्छति ।
आज्ञां प्रज्ञां यशः कीर्तिमप्सु नित्यं निधापयेत् ॥
प्रार्थयन् दीर्घमायुश्च वायसेभ्यः प्रयच्छति ।
आकाशं गमयेदप्सु स्थितो वा दक्षिणामुखः ॥
पितॄणां स्थानमाकाशं दक्षिणादिक् तथैव च ।

शङ्खलिखितौ[2]

एवं वरान् याचयित्वा नमस्कृत्य पिण्डानग्नौ वाऽप्सु वा क्षिपेत् । पत्नीं वा मध्यमं पिण्डमश्नीयादार्तवस्नाताम् ॥

याज्ञवल्क्यः [१, २५७]

पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा ।
प्रक्षिपेत् सत्सु विप्रेषु द्विजोच्छिष्टं न मार्जयेत् ॥[3]

तत्र देवलः

निवृत्ते पितृमेधे तु दीपं प्रच्छाद्य पाणिना ।
आचम्य पाणिं प्रक्षाल्य ज्ञातीन् शेषेण तोषयेत् ॥
ततो ज्ञातिषु तुष्टेषु स्वान् भृत्यान् प्रति पूजयेत् ।
पश्चात् स्वयं च पत्नीभिः पितृशेषमुदाहरेत् ॥
एकोद्दिष्टेषु शेषं च ब्राह्मणेभ्यः समुत्सृजेत् ।
ततः स्वयं च भुञ्जीत पुनर्मङ्गलभोजनम् ॥

(1) अपरार्के, ५५१

(2) अपरार्के, ५५०

(3) न स्वेच्छया विनियुञ्जीत । ब्राह्मणेषु चानुत्थितेषु पित्रर्थब्राह्मणोच्छिष्टं न मार्जयेत् (विश्वरूपः)

'प्रच्छाद्य' निर्वाप्य 'उदाहरेत्'। 'एकोद्दिष्टेषु' एकाहादिश्राद्धेषु ॥

मनुः [३,२६४-२६५]

प्रक्षाल्य हस्तावाचम्य ज्ञातिप्रायं प्रकल्पयेत्।
ज्ञातिभ्यः सत्कृतं दत्त्वा बान्धवानपि पूजयेत् ॥
उच्छेषणं तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः।
ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थितः ॥

'ज्ञातिप्रायं' ज्ञातिबहुलम्। 'ततो गृहबलिम्' इति, गृहबलिशब्दो भूतयज्ञाभिधायको वैश्वदेवादिनित्यमहायज्ञोपलक्षणपरः।

तथा च मत्स्यपुराणे

निर्वृत्य प्रतिपत्त्यर्थं पर्युक्ष्याग्निं स मन्त्रवित्।
वैश्वदेवं प्रकुर्वीत नित्यकं बलिमेव च ॥

आदित्यपुराणे

पितॄन् संतर्प्य विधिवद्बलिं दद्याद्विधानतः।
वैश्वदेवं ततः कुर्यात् पश्चाद्ब्राह्मणभोजनम् ॥

अत एव बलिवैश्वदेवक्रमो मत्स्यपुराणानुसारेण बोद्धव्यः ॥

मार्कण्डेयपुराणे

नित्यक्रियां पितॄणां च केचिदिच्छन्ति सत्तमाः।
न पितॄणां तथैवान्ये शेषं पूर्ववदाचरेत् ॥
पृथक्पाकेन नेत्यन्ये केचित्सर्वमपूर्ववत्।

वसिष्ठः [११,२१-२२]

श्राद्धे नोद्वासनीयानि उच्छिष्टान्यादिनक्षयात्।
श्च्योतन्ते वै सुधाधारास्ताः पिबन्त्यकृतोदकाः ॥

उच्छिष्टं न प्रमृज्यात्तु यावन्नास्तमितो रविः ।
क्षीरधारास्ततो यान्त्यक्षयाः सञ्चरभागिनः ॥

'च्योतन्ते' क्षरन्ति । 'नोद्वासनीयानि उच्छिष्टानि' इति भूमिष्ठोच्छिष्टविषयम् । 'उच्छिष्टं न प्रमृज्यात्' इति भूमिगतोच्छिष्टपात्रविषयम् । 'सञ्चरभागिनः', अन्यस्मै दत्तं अन्यं सञ्चरति यदन्नं तत् 'सञ्चरम्', तद्ये भजन्ते दासादयः ॥

ब्रह्मपुराणे

अस्तंगते ततः सूर्ये विप्रपात्राणि चाम्भसि ।
निःक्षिपेत् प्रयतो भूत्वा सर्वाण्यधोमुखान्यपि ॥
द्वितीयेऽहनि सर्वेषां भाण्डानां क्षालनं तथा ।
अनन्ता जायते तृप्तिः पितृणां येन सर्वदा ॥
भक्ष्यं भोज्यं तथा पेयं यत्किंचित् पच्यते गृहे ।
न भोक्तव्यं पितृणां तदनिवेद्य कथंचन ॥
ज्ञातिभ्यः सततं दत्त्वा बान्धवानपि पूजयेत् ।

बृहस्पतिः [श्राद्ध., १५५]

एवं देवान् पितॄंस्त्रींश्च तर्पयित्वा विधानतः[1] ।
पुत्रभृत्यादिसहितो गृहस्थो भोक्तुमर्हति ॥

शातातपः

शेषमन्नमनुज्ञातं भुञ्जीत तदनन्तरम् ।
इष्टैः सार्धं तु विधिवद्बुद्धिमांस्तु समाहितः ॥

उशना

तैरनुज्ञातः शेषमिष्टेभ्यो दद्यात् स्वयं वा भुञ्जीत ।
'स्वयं वा' इति वाशब्दः समुच्चये ॥

(1) 'द्विजोत्तमः' पुत्रमित्रादिसहितः इति स्मृतिचन्द्रिका (श्रा., p. 412)

आपस्तम्बः [२, १७, १६]

सर्वतः समवदाय शेषस्य ग्रासावराध्यं प्राश्नीयाद्यथोक्तम्।

[1]'ग्रासावराध्यं' ग्रासासूनम्। 'यथोक्तम्' गृह्योक्तं[2], 'प्राणे निविष्टोऽमृतं जुहोमि ब्रह्मणि आत्माऽमृतत्वाय' इति मन्त्रेण।

ब्रह्मपुराणे[तै. आर., १०, ३४, १]

भगिन्यो बान्धवाः पूज्याः श्राद्धेषु च सदैव हि॥

तथा

वन्दिमागधसूताश्च तौर्यत्रिकविदस्तथा।
अलब्धलाभाः श्राद्धेषु नाशयन्ति महद्यशः॥
तस्मात्तेऽपि विभक्तव्याः सकलं च विभज्य च॥

याज्ञवल्क्यः [१,२४९]

प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम्।
ब्रह्मचारी भवेत्तां तु [3]रजनीं ब्राह्मणैः सह॥

निगमः

अनुज्ञातो गृह्यान् बालवृद्धांश्च परितोष्य भुञ्जीत। तस्याह्न उभयो रात्रिमुभावपि ब्रह्मचारिणौ स्याताम्॥

[4]वसिष्ठः, वृद्धशातातपश्च प्रथमे

श्राद्धं दत्त्वा च भुक्त्वा च मैथुनं योऽधिगच्छति।
भवन्ति पितरस्तस्य तन्मासे रेतसो भुजः॥

(1) 'ग्रासासूनं (?) इति मूलमातृका'॥ 'ग्रासावराध्यं ग्रासोऽवराध्यो अवमा मात्रा यस्य तत् ग्रासावराध्यं, छान्दसो ह्रस्वः (हरदत्त.)

(2) आपस्तम्बगृह्यसूत्र, ८, २१, ९–"सर्वतस्समवदाय उत्तरेण यजुषा शेषस्य ग्रासावराध्यं प्राश्नीयात्॥"

(3) 'तुशब्दात् पुनर्भोजनादिरहितोऽपि भवेत्' इति मिताक्षरा।

(4) ११, ३७–३८

यस्ततो जायते गर्भो दत्वा भुक्त्वा च पैतृकम् ।
न स विद्यामवाप्नोति क्षीणायुश्चैव जायते ॥

[1]बृहस्पति[2]र्मनुर्देवलौ च द्वितीये

तां निशां ब्रह्मचारी स्याच्छ्राद्धभोक्ता तथैव च ।
अन्यथा वर्तमानौ तौ स्यातां निरयगामिनौ ॥
श्राद्धभुग्वृषलीतल्पं तदहर्योऽधिगच्छति ।
तस्याः पुरीषे तं मासं पितरस्तस्य शेरते ॥
तस्मात्प्रदाता भोक्ता च श्राद्धे नियमितो भवेत् ।
अर्चकश्चार्चितस्तूभौ स्यातां नरकगामिनौ ॥
'वृषलीतल्पम्' इति मैथुनोपलक्षणम् ।

शातातपः

श्राद्धं कृत्वा परश्राद्धे भुञ्जते ये तु विह्वलाः ।
पतन्ति पितरस्तेषां लुप्तपिण्डोदकक्रियाः ॥

मत्स्यपुराणे

पुनर्भोजनमध्वानं द्यूतमायासमैथुनम् ।
श्राद्धकृच्छ्राद्धभुक् चैव सर्वमेतद्विवर्जयेत् ॥
स्वाध्यायं कलहं चैव दिवास्वप्नं च सर्वदा ।

विष्णुपुराणे

श्राद्धे नियुक्तो भोक्ता वा भोजयित्वा नियोज्य च ।
व्यवायी रेतसो गर्ते मज्जयत्यात्मनः पितॄन् ॥

'व्यवायी' मैथुनकर्ता ॥

(1) बृहस्पतिः (श्राद्ध.) १४२–१४४ ; 'श्राद्धकृच्छ्राद्धकैः सह" । पराशरमाधवीयपाठः

(2) मनुः, ३, २५०

## ॥ २२ ॥

## ॥ अथपित्रादिस्वरूपम् ॥

तत्र मनुः [३,२८४]

वसून् वदन्ति तु पितॄन् रुद्रांश्चैव पितामहान्।
प्रपितामहांस्तथादित्यान् श्रुतिरेषा सनातनी ॥

देवलः

[1]सर्वतः पितरः पूज्या देवतानां च देवताः।
शुचयो निर्मलाः पुण्या दक्षिणां दिशमाश्रिताः ॥
वसवः पितरो ज्ञेया रुद्रा ज्ञेयाः पितामहाः।
प्रपितामहास्तथाऽऽदित्याः श्रुतिरेषा सनातनी ॥
प्रेतानुद्दिश्य यत्कर्म क्रियते मानुषैरिह।
तुष्यन्ति पितरस्तेन न प्रेताः पितरः स्मृताः[2] ॥

याज्ञवल्क्यः [१,२६९]

वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः।

(1) 'सर्वत्र' इति हेमाद्रिपाठः (७३)

(2) 'न प्रेताः पितर' इति निन्दार्थवादेन प्रेतानां हविः प्रत्युद्देश्यत्वलक्षणं देवतात्वं निषिध्यत इति न मन्तव्यं प्रेतानुद्दिश्येत्युपक्रमबाधापत्तेः। किं तु नानायोनिगतानां मनुष्याणां कथं तृप्तिसन्तोषपूर्वकममानुषशक्तिं संपाद्य फलविशेषदातृत्वमित्याशङ्कां वारयितुं वस्वादीनां प्रेताधिष्ठातृत्वलक्षण पितृत्वमुच्यत इति। अनेनैवाभिप्रायेण याज्ञवल्क्येनोक्तम् ॥ (हेमाद्रिः, ७९)

प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेन तर्पिताः[1] ॥ – पैठीनसिः

य एवं विद्वान् पितॄन् यजते वसवो रुद्रा आदित्याश्चास्य प्रीता भवन्ति ।

क एते पितरो नाम येभ्यो दत्तमिहाक्षयम् ॥

वसवः पितरो रुद्राः पितामहा आदित्याः प्रपितामहाः तेभ्यो दत्तमिहाक्षयं भवति ॥

अत्र यद्यपि—"वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः" इत्यादिवाक्येभ्यः श्राद्धे वस्वादीनां देवतात्वं प्रतीयते, तथापि 'अमुकामुकगोत्रैतत्तुभ्यम्' इत्यादिवाक्येभ्यः असावेतत्त इत्येवं यजमानस्य पित्रे, असावेतत्त इति पितामहाय असावेतत्त इति प्रपितामहायेति श्रुतेश्च, गोत्रनामसंबन्धविशेषकीर्तनेन, स्वजनकादीनां चतुर्थ्यन्तत्वेन श्रवणाद्देवतात्वम् । वस्वादिरूपेण त एव ध्येयाः, 'य एवं विद्वान् पितॄन् यजते' इति पैठीनसिवचनात् ॥

(1) अग्न्यादयो नक्षत्रान्ता वसवः । प्राणाद्यात्मैकादश रुद्राः । द्वादशमासा आदित्याः । एते नित्या एवार्थाः पितरः । एत एव श्राद्धदेवताः प्रत्येतव्याः । तस्मादविरोधः । एवं सति मनुष्यपितॄणां किमायातम् । उच्यते । एते देवा वस्वादयः प्रीताः प्रीणयन्ति यत्रतत्रस्थान् मनुष्याणां पितॄन् श्राद्धात्तरसानुप्रदानेनेत्यर्थः । सर्वप्राणिगत्वात् चैषां सर्वावस्थितपितृतर्पणसामर्थ्यमविरुद्धम् । अग्न्यादीनां च सर्वेषामन्तर्वर्तिन्यो देवता इत्यन्त एवेत्यविरोधः । पूर्वमपि अनेनैवाभिप्रायेण पितॄणां संप्रदानत्वमुक्तम् । पितृभ्यो दद्यादिति चोदितत्वात् तदुपपत्त्यपेक्षामुपपादयन्तोऽर्थवादा अपि हि प्रमाणमेवेत्यवधार्यं नातीव कुतार्किकोक्तकुसृत्यालीकचोद्याभिनिवेशः कार्यः । ननु चाचोदिता एव वस्वादयो देवताः । इयमेव हि तच्चोदनेत्युच्यमाने पूर्वचोदितपितृदेवतात्वहानिः । अत्रोच्यते । वस्वादीनां देवतात्वाभिधानात् पितॄणां च संप्रदानत्वादविरोधः । देवा इति वक्तव्ये देवता इति पादपूरणार्थः । यत्कर्त्रा पितृभ्यो दातुमिष्टं तद्वस्वादयो यत्रतत्रस्थेभ्यः सर्वगतत्वेन समर्था दातुमिति । अतोऽनवद्यम् । वस्वादिभ्योऽपि च प्रदातृवचनात् तृप्तिरस्त्येवेत्यवसेयम् ॥ विश्वरूपाचार्यः

## ॥ २३ ॥

## ॥ अथ श्राद्धस्तुतिः ॥

तत्र यमः

ये यजन्ति पितॄन् देवान् ब्राह्मणान् सहुताशनान् ।
सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते ॥
दत्त्वानेन विधानेन लभते चतुरो वरान् ।
धनमन्नं सुतानायुर्ददते पितरो भुवि ॥
आयुः पुत्रान् यशः स्वर्गं कीर्तिं पुष्टिं बलं श्रियम् ।
पशून् सुखं धनं धान्यं प्राप्नुयात् पितृपूजनात् ॥

देवलः

अरोगः प्रकृतः स्वस्थश्चिरायुः पुत्रपौत्रवान् ।
अर्थवानर्थभोगी च श्राद्धकामो भवेदिह ॥
परत्र परमां तुष्टिं लोकांश्च विपुलान् शुभान् ।
श्राद्धकृत् स समाप्नोति यशश्च विपुलं नरः ॥

याज्ञवल्क्यः [१, २७०]

आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।
प्रयच्छन्ति तथा राज्यं नृणां प्रीताः पितामहाः ॥

हारीतः [अ. १२]

इमं श्राद्धविधिं पुण्यं कुर्याद्वापि पठेत्तु यः ।
स सर्वकामसंयुक्तो ह्यमृतत्वं च विन्दते ॥

बृहस्पतिः [श्राद्ध, ४१]

य एवं वेत्ति मतिमांस्तस्य श्राद्धफलं भवेत्।
उपदेष्टाऽनुमन्ता च लोके तुल्यफलौ स्मृतौ ॥

हारीतः [अ. १२]

न तत्र वीरा जायन्ते नारोगा न शतायुषः।
न च श्रेयोऽधिगच्छन्ति यत्र श्राद्धं विवर्जितम् ॥
अपि मूलैः फलैर्वापि तथा ह्युदकतर्पणैः।
अविद्यमाने कुर्वीत नैव श्राद्धं विवर्जयेत् ॥

॥ २४ ॥

## ॥ अथामश्राद्धम् ॥

तत्र मत्स्यपुराणे

आमश्राद्धं यदा कुर्याद्विधिज्ञः श्राद्धदस्तदा ।
तेनाऽग्नौकरणं कुर्यात् पिण्डांस्तेनैव निर्वपेत् ॥

जाबालिः

आमश्राद्धप्रदोऽनग्निः सर्वत्रैव मनीषिणाम् ।
तेनाऽग्नौकरणं कुर्यात् पिण्डांस्तेनैव निर्वपेत् ॥

अत्रेदं तात्पर्यम्–'सर्वत्र' अमावास्यादौ श्राद्धनिमित्ते उपस्थितेऽनग्निरामश्राद्धं कुर्यात् । अनग्निश्चात्र पाकसमर्थाग्निरहितः । एतच्च सकलपाकसामग्र्यभावोपलक्षणम् । न पुनरनग्निरनाहिताग्निः । अनुपनीतभार्यादिरहितप्रवासस्थानां पाकेन श्राद्धाभिधानात् ॥

तथा च मत्स्यपुराणे

उभाभ्यामपि हस्ताभ्यामाहृत्य परिवेषयेत् ।
प्रशान्तचित्तः सलिलं दर्भपाणिरशेषतः ॥
शुभांस्तु सूपशाकाद्यान्नानाभक्ष्यांस्तथैव च ।
अन्नं तु सदधिक्षीरं गोघृतं शर्करान्वितम् ॥

तथा

भुक्तवत्सु ततस्तेषु भोजनोपान्तिके नृप ।
सार्ववर्णिकमन्नाद्यमश्नीयात् प्लाव्य वारिणा ॥
समुत्सृजेद् भुक्तवतामग्रतो विकिरेद् भुवि ।

तथा

तृप्तान् ज्ञात्वोदकं दद्यात् सकृद्विप्रकरे तथा।
आचान्तेष्वपि चाऽऽचम्य वारि दद्यात् सकृत् सकृत्॥

तथा

उच्छेषणं तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः॥

एवमादिवाक्यैः पाकेन श्राद्धममिधाय तत्रैवोक्त-मध्याये—

एतच्चानुपनीतोऽपि कुर्यात् सर्वेषु पर्वसु।
श्राद्धं साधारणं नाम सर्वकामफलप्रदम्॥
भार्याविरहितोऽप्येतत् प्रवासस्थोऽपि भक्तिमान्।
शूद्रोऽप्यमन्त्रवत् कुर्यादनेन विधिना बुधः॥ इति।
एतेनैतदुक्तं भवति साग्नेर्निरग्नेश्चापद्येवामश्राद्धमिति॥

साग्नेर्निरग्नेश्चापद्येवामश्राद्धं सदैव हि।
एवं शूद्रोऽपि सामान्यं वृद्धिश्राद्धं च सर्वदा॥
नमस्कारेण मन्त्रेण कुर्यादामान्नवद्बुधः।
इति मत्स्यपुराण एवाभिधानात्॥

## ॥ २५ ॥

## ॥ अथ जीवत्पितृकादिश्राद्धम् ॥

तत्र मनुः [३, २२०-२२२]

[1]ध्रियमाणे तु पितरि पूर्वेषामेव निर्वपेत्।
विप्रवद्वापि तं श्राद्धे स्वकं पितरमाशयेत्॥
पिता यस्य तु वृत्तः स्याज्जीवेद्वापि पितामहः।
पितुः स नाम सङ्कीर्त्य कीर्तयेत्प्रपितामहम्॥
पितामहो वा तच्छ्राद्धं भुञ्जीतेत्यब्रवीन्मनुः।
कामं वा तदनुज्ञातः स्वयमेव समाचरेत्॥

'ध्रियमाणे' अवतिष्ठमाने जीवतीति यावत्। नामसंकीर्तनमत्र श्राद्धोपलक्षणार्थम्। 'श्राद्धम्' अत्र श्राद्धार्थम्। 'कामं वा तदनुज्ञात' इति, पित्रादिभोजनादिदं पक्षान्तरम्। तेन पित्रादिनाऽनुज्ञातः 'कामम्' अभिलषितं 'समाचरेद्' इत्यर्थः॥

तथा [९, १८६]

त्रयाणामुदकं कार्यं त्रिषु पिण्डः प्रवर्तते।
चतुर्थः संप्रदातैषां पञ्चमो नोपपद्यते॥

विष्णुः [७५,१-७]

पितरि जीवति यः श्राद्धं कुर्यात्स येषां पिता कुर्यात् तेषां कुर्यात्। पितरि पितामहे च जीवति येषां पितामहः। पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यात्। यस्य

(1) 'ध्रियमाणे' जीवति (मेधातिथिः)

पिता प्रेतः स्यात् स पित्रे पिण्डं निधाय पितामहात्परं द्वाभ्यां दद्यात् । यस्य पिता पितामहश्च प्रेतौ स्यातां स ताभ्यां पिण्डौ दत्त्वा पितामहपितामहाय दद्यात् । यस्य पितामहः प्रेतः स्यात् स तस्मै पिण्डं निधाय प्रपितामहात्परं द्वाभ्यां दद्यात् ॥

मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः ।
मन्त्रोहेण यथान्यायं शेषाणां मन्त्रवर्जितम् ॥

'पिता प्रेतः स्याद्' इति, पितैव प्रेतो भवति पितामहप्रपितामहौ च जीवत इत्यर्थः । 'मन्त्रोहेण' 'शुन्धन्तां पितर' इत्यादिमन्त्रेषु[1] पितर इत्यत्र मातामहा इत्यादिपदप्रक्षेपलक्षणेन । 'शेषाणां' पितृव्यमातुलादीनाम् । 'मन्त्रवर्जितम्' आवाहनादिकं मन्त्रवर्ज्जं कार्यमित्यर्थः[2] ॥

हारीतः

जीवे पितरि वै पुत्रः श्राद्धकालं विवर्जयेत् ।
येषां वापि पिता दद्यात् तेषामेव प्रचक्षते ॥
पितामहे च जीवे [3]वै पितर्येव समापयेत् ।
उदकाञ्जलिं च दीपं च अञ्जनं च प्रयत्नतः[4] ॥

(1) 'शुन्धन्तां पितरः शुन्धन्तां पितामहाः शुन्धन्तां प्रपितामहाः' (आपस्तम्बश्रौतसूत्र, २, ६, १४)

(2) पित्रादिषु त्रिषु जीवत्सु, श्राद्धमेव न कुर्यात् । मृतपितृको जीवत्पितामहश्च पितृपिण्डं दत्त्वा प्रपितामहवृद्धप्रपितामहाभ्यां पिण्डं दद्यात् ॥ (वैजयन्ती)

(3) 'सजीवे वै' इति गोविन्दानन्दपाठः (श्रा. कौ., ५५२)

(4) नन्वेवं श्रुतिद्वयविरोधः परिहरणीयः । सत्यम् । पुत्रजन्मनामकरणादिनिमित्तकवृद्धिश्राद्धविषयं 'जीवन्तमतिदद्याद्वा' इति वचनम् । 'न जीवन्तमतिक्रम्य' इति वचनं तदितरपितृकृत्यविषयम् । यद्वा पूर्ववचनं तर्पणपार्वणादिषु सकलपितृकृत्येषु नित्याधिकारनिषेधार्थम् । उत्तरवचनं तु उपकारातिशयात् ऐच्छिकानुष्ठानार्थम् । कर्माङ्गश्राद्धं तु अवश्यमनुष्ठेयम्, अन्यथा कर्मवैगुण्यप्रसङ्ग इति ॥ (श्रा. कौ., ५५३)

'न जीवन्तमतिक्रम्य दद्यात्' इति श्रुतिबलादमावास्यादावप्येकस्यैव श्राद्धं दद्यात्। 'उदकाञ्जलिम्' इत्यादिवचनाच्च गृहमेधीयवदपूर्वमिति जयस्वामी ॥

यज्ञपार्श्वपरिशिष्टम्

होमान्तः पितृयज्ञः स्याज्जीवे पितरि जानतः।
पितरं भोजयित्वा च पिण्डौ निष्टृणुयात् परौ ॥
येभ्यः पिण्डान् पिता दद्यात् तेभ्यः पुत्रोऽपि दापयेत्।
न जीवन्तमतिदद्यादित्येषा नैगमी श्रुतिः ॥
जीवेत्पितामहो यस्य पिता चान्तरितो भवेत्।
पितुरेकस्य दातव्यमेवमाहुर्मनीषिणः ॥
त्रीन् वा पिण्डान् समारोप्य मध्यमं तेन भोजयेत्।
द्वौ पिण्डौ ब्राह्मणे दद्यादग्नौ चाम्भसि वा क्षिपेत्[1] ॥
उभौ यस्य व्यतीतौ च जीवेच्चेत् प्रपितामहः।
पिण्डौ निष्टृणुयात् पूर्वौ भोजयेत् प्रपितामहम् ॥

निगमः

यो वा जीवति पितृणां तं भोजयेत् । सपिण्डानित्येके । जीवतामजीवतां वा देयमेवेति हिरण्यकेतुः । कस्माद्यज्ञविधित्वाद्दर्शस्याङ्गत्वात् । एभ्य एव एतद्भागं करोतीति च श्रुतेरेकस्मिन्नपि जीवत्यदानमिति कात्यायनः ॥

'यज्ञविधित्वात' इति जीवनमजीवनं वा न विवक्षितम् । किं तु 'यज्ञविधित्वात्' पित्राद्युद्देशेन

(1) पितृपितामहवत् जीवत्पितामहस्यापि तदुद्देशेन ब्राह्मणरहितं श्राद्धं कृत्वा श्राद्धद्वये ब्राह्मणान्तरवत् पितामहमपि तेन श्राद्धद्रव्येण भोजयेत् । अथवाऽग्नौ जले वा श्राद्धीयद्रव्यं क्षिपेत् । न तु साक्षात् पितामहे श्राद्धं करणीयम् । एतच्च शाखान्तरीयमेव बहूनामननुमतत्वात् ॥ (गोविन्दानन्दः ५५५)

त्यागरूपस्य यज्ञस्यावश्यकतया विहितत्वात्। 'दर्शस्याङ्गत्वात्' दर्शस्य दर्शाख्यस्य कर्मणः पिण्डपितृयज्ञोऽङ्गं यत इत्यर्थः ॥

छन्दोगपरिशिष्टे कात्यायनः[1]

सपितुः पिण्डकृत्येषु अधिकारो न विद्यते।
न जीवन्तमतिक्रम्य किंचिद्दद्यादिति श्रुतिः ॥
पितामहे ध्रियमाणे पितुः प्रेतस्य निर्वपेत्।
पितुस्तस्य च वृद्धस्य जीवेच्च प्रपितामहः[2] ॥
पितुः स नाम सङ्कीर्त्य कीर्तयेत्प्रपितामहम्।
पितुः पितुः पितुश्चैव तस्याऽपि पितुरेव च।
कुर्यात् पिण्डत्रयं यस्य संस्थितः प्रपितामहः।
जीवन्तमतिदद्याद्वा प्रेतायान्नोदके द्विजः ॥
पितुः पितृभ्यो वा दद्यात् स पितेत्यपरा श्रुतिः।

'तस्य च वृद्धस्य' इति, अनेन पितामहः परामृश्यते। 'तस्यापि पितुः' पितामहस्यापि पितुः प्रपितामहस्य। 'संस्थितः' मृतः ॥

(2) गोभिलस्मृति, २, ९३-९६—ध्रियते च [ध्रियमाणो]; वृत्तस्य [वृद्धस्य]। 'वृत्तस्य' इति गोविन्दानन्देनादृतपाठः (श्राद्ध. कौ., ५५१)। 'पितुः स नाम सङ्कीर्त्य कीर्तयेत् प्रपितामहम्' इत्ययमर्धश्लोकः गोभिलस्मृतौ, श्राद्धक्रियाकौमुद्यां च न लब्धः।

(1) पितृकृत्येषु पिण्डपितृयज्ञपार्वणादिषु जीवज्जनकस्याधिकारो नास्ति। हेतुमाह 'न जीवन्तम्' इति। 'सपितुः' इत्यत्र पितृपदमधिकारिपितृपरम्। तेन पतिते, प्रव्राजिते वा, अचिकित्स्यरोगजरादिना अक्षये वा, पितरि जीवत्यपि पितृकृत्येऽधिकारोऽस्ति ॥ (गोविन्दानन्दः, पृ. ५५२)

पिण्डपितृयज्ञे कात्यायन[श्रौत]सूत्रम्[2]

प्रेतेभ्यो ददाति जीवत्पितृकोऽपि जीवान्तर्हितेऽपि। जीवत्पितृकस्य होमान्तम्। अनारम्भो वा। न व्यवेते जातूकर्ण्यः। न जीवन्तमतीति श्रुतेः॥

जीवत्पितृकस्य त्रयः पक्षाः— जीवन्तं पितरमतिक्रम्य येभ्यः पिता दद्यात् तेभ्यो दद्यादित्येकः। होमान्तं 'सोमाय पितृमते' [आप. श्रौत., २,६,१२.] इत्यादि दक्षिणाग्नौ होममात्रमित्यपरः। 'अनारम्भो वा' अकरणमेव वा इति तृतीयः। 'न व्यवेते' इति न जीवता केनचिद्व्यवहिते देयमित्यर्थः॥

पितृपितामहप्रपितामहाधिकारे पिण्डपितृयज्ञे—
आश्वलायनश्रौतसूत्रम् [२, ६, २२-२४]

जुहुयाज्जीवेभ्यः। सर्वहुतं सर्वजीविनः। नामान्यविद्वांस्ततपितामहप्रपितामहेति॥

'जुहुयाज्जीवेभ्यः' इति, पित्रादीनां मध्ये यो जीवति तस्मै पिण्डं जुहुयात्। प्रेताय तु पिण्डपितृयज्ञविधानेन दद्यात्। सर्वे यदि जीवन्ति तदा त्रीन् पिण्डान् जुहुयादित्यर्थः॥

(2) ४, १, २३-२७. यत्पितृभ्यो दानमुक्तं तन्मृतेभ्यः पितृभ्यो दद्यात्। जीवन् पिता यस्य स 'जीवत्पितृको' जीवेन पित्रादिना व्यवहितेभ्योऽपि पितामहादिभ्यो दद्यात्। जीवत्पितृकोऽपि पिण्डपितृयज्ञमनुतिष्ठेत्। अनुतिष्ठंश्च पितृपितामहप्रपितामहेषु यः कश्चित जीवति तं जीवन्तं परित्यज्य त्रिभ्यः पिण्डान् दद्यात्॥ एवं प्राप्त आह। जीवत्पितृकस्य यजमानस्य होमान्तमेव पिण्डपितृयज्ञसंज्ञं कर्म स्यात्। न तत ऊर्ध्वं पिण्डदानादि॥ एवं पक्षमुपन्यस्य सिद्धान्तमाह 'अनारम्भो वा' इति। वाशब्दः पूर्वपक्षनिरासार्थः। पिण्डदानस्य प्रधानत्वात्तदभावे होमस्याङ्गभूतस्यानुष्ठानं न युक्तम्। अतो जीवत्पितृकेन पिण्डपितृयज्ञो नानुष्ठेयः॥ तत्रोपपत्तिमाह— जीवितेन पित्रादिना व्यवहिते पितामहादौ पिण्डदानं न भवतीति जातूकर्ण्य आह। तत्र हेतुमाह—अतो जीवत्पितृकस्य प्रधाने पिण्डदाने निषिद्धे अनारम्भपक्ष एव श्रेयान्॥ (विद्याधरकृतसरलाख्या वृत्तिः, पृ. १३४-१३५)

॥ २६ ॥

## ॥ अथ द्विपितृकश्राद्धम् ॥

तत्र शाङ्खायनसूत्रम्

पिण्डान् यथाऽवनेजितं निधायोभावेकस्मिन् पिण्डे पितृभेदे। न जीवत्पितुरस्ति। न जीवान्तर्हिताय। येभ्यो वा पिता तेभ्यः पुत्रो होमान्तं वा॥

'उभावेकस्मिन्' उभौ बीजिक्षेत्रिणौ। 'एकस्मिन् पिण्डे' एकस्मिन्नपि पिण्डे संकीर्तयेदित्यर्थः।

प्रवराध्यायः

अथ यदि पितृव्येन ज्ञातिना वैकार्येण जातास्ते परिगृहीतुरेव भवन्ति। अथ यद्येषां स्वभार्यास्वपत्यं न स्यात् तद्रिक्थं हरेयुः। पिण्डं चैभ्यस्त्रिपुरुषं दद्युः। यद्यपि स्यादुभाभ्यामेव दद्युरित्याचार्यवचनम्। द्वे श्राद्धे कुर्यादेकं वा। द्वे वा पृथगुद्दिश्य एकपिण्डे द्वावनुकीर्तयेत् प्रतिगृहीतारं चोत्पादयितारं च। तृतीयात्पुरुषात् परिगृहीता॥

'एषां' क्षेत्रपितृव्यप्रभृतीनां बीजिनाम्॥

हारीतः

नाऽबीजं क्षेत्रं फलति नाऽक्षेत्रं बीजं रोहतीत्युभयदर्शनादुभयोरपत्यमित्यपरे। तेषामुत्पादयितुः प्रथमः प्रवरो भवति। द्वौ द्वौ पिण्डौ निर्वापे दद्युरेकपिण्डे वा

द्वावनुकीर्तयेत् । द्वितीये पुत्रः । तृतीये पौत्रो लेपिनश्च । त्रीनन्वाचक्षाण आसप्तमादित्येके ॥

'तेषामि'ति, तेषां बीजिक्षेत्रिणां पितॄणां मध्ये बीजिनः प्रवरमार्षेयं प्रथमं निर्दिशेत् । ततः क्षेत्रिण इति द्विप्रवरता । अस्य क्रत्वङ्गार्षेयप्रवरेण 'निर्वापे' पितृयज्ञे, एकस्मिन्नेव द्वावनुकीर्तयेदिति । अत्र वीप्सा द्रष्टव्या। "यदि द्विपिता स्यादेकैकस्मिन् द्वौ द्वावुपलक्षयेत्" इत्यापस्तम्बवचनानुसारात् । तस्मादेकस्मिन्नेव पिण्डे द्वौ द्वौ पितरौ पितामहौ प्रपितामहौ चानुकीर्तनीयावित्यर्थः । 'द्वितीये' पितामहपिण्डे । द्वितीय इति प्रपितामहपिण्ड-स्याप्युपलक्षणम् । 'पुत्रः' द्वामुष्यायणस्य । अत्रापि द्वौ द्वावनुकीर्तयेदित्यनुषङ्गः। 'तृतीये' प्रपितामहपिण्डे। 'पौत्रो' द्वामुष्यायणस्य। अत्रापि द्वौ द्वावनुकीर्तयेदिति सम्बन्धः। 'लेपिनश्च' अनुकीर्तयेदिति शेषः । 'त्रीनन्वाचक्षाणः' पित्रादिपिण्डाननुवदन्। 'आसप्तमात्' सप्तमपुरुषपर्यन्तम् ॥

याज्ञवल्क्यः [२,१२८]

अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।
उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥

मरीचिः

सगोत्राद्वाऽन्यगोत्राद्वा यो भवेद्विधवासुतः ।
पिण्डश्राद्धविधानं च क्षेत्रिणे प्राक् प्रदापयेत् ॥
बीजिने तु ततः पश्चात् क्षेत्रे जीवति चेत् क्वचित् ।
बीजिने दद्युरादौ तु मृते पश्चात् प्रदीयते ॥
उभौ यदि मृतौ स्यातां बीजिन्यादौ तदा ददेत् ।
क्षेत्रिण्यादौ न दत्तं स्याद्बीजिने नोपतिष्ठति ॥

'सगोत्रादन्यगोत्राद्वे'ति सवर्णमात्रादित्यर्थः ॥

[1]नारदः

जाता ये त्वनियुक्तायामेकेन बहुभिस्तथा ।
अरिक्थभाजस्ते सर्वे बीजिनामेव ते सुताः ॥
दद्युस्ते बीजिनः पिण्डं माता चेच्छुल्कतो हृता ।
अशुल्कोपनतायां तु पिण्डदा वोढुरेव ते ॥
'अरिक्थभाजः' क्षेत्रिणो रिक्थं न भजन्ते ।

॥ २६-अ ॥

॥ अथ पुत्रिकापुत्रश्राद्धम् ॥

तत्र शङ्खलिखितौ

पुत्रिका पुत्रवदिति प्रचेतसस्तस्या अपत्यं पुत्रिकासुतो मातामहपितामहानां पिण्डदः । पुत्रदौहित्रयोर्न विशेषोऽस्त्यनुग्रहे ॥

'मातामहपितामहानाम्' इति वंशद्वयोपलक्षणम् । 'पुत्रदौहित्रयोः' औरसपुत्रपुत्रिकासुतयोः । 'अनुग्रहे' नरकोत्तारणादिस्वरूपे ॥

मनुः [९,१३२]

दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत् ।
स एव दद्याद् द्वौ पिण्डौ पित्रे मातामहाय च ॥
द्वितीयं तु पितुस्तस्यास्तृतीयं तु पितुः पितुः ॥

'दौहित्रो' अत्र पुत्रिकासुतः ।

इति श्रीमद्गोविन्दचन्द्रदेवमहासन्धिविग्रहिकभट्टश्रीहृदयधरात्मजश्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ द्व्यामुष्यायणपर्व ॥

(1) नारदस्मृतिः, १६, १९ ; नारदसंहिता, १४, १८ ॥ 'अनियुक्तायां स्वैरिण्याम् । 'अरिक्थंभाजः' क्षेत्रिरिक्थं न लभन्ते, मातृक्षेत्रिका मातामहानां न रिक्थं भजन्त इति प्रकाशकारः । किमविशेषेण पिण्डदानमित्याह—'दद्युस्ते बीजिने पिण्डं माता चेच्छुल्कतो हृता' इति । यदि क्षेत्रिणः शुल्कं मूल्यं दत्त्वा बीजिना माता हृता अशुल्कोपनतायामित्यादि युक्तम् ॥ (विवादरत्नाकरः, ५८७–५८८).

## ॥ २७ ॥

## ॥ अथैकोद्दिष्टम् ॥

तत्र शातातपः

एकोद्दिष्टं तु यच्छ्राद्धं नैमित्तिकमिहोच्यते ।
तदप्यथैव कर्तव्यमयुग्मानाशयेद्द्विजान् ॥

मत्स्यपुराणे

तत एकादशाहे तु द्विजानेकादशैव तु ।
क्षत्रादिसूतकान्ते तु भोजयेदयुजो द्विजान् ॥
द्वितीयेऽह्नि पुनस्तद्वदेकोद्दिष्टं समाचरेत् ।

याज्ञवल्क्यः [१,२५१-२५२]

एकोद्दिष्टं दैवहीनमेकार्घैकपवित्रकम् ।
आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ॥
उपतिष्ठतामित्यक्षय्यस्थाने विप्रविसर्जने ।
अभिरम्यतामिति वदेद्ब्रूयुस्तेऽभिरताः स्म ह ॥

'अक्षय्यस्थाने' अक्षयपदप्रयोगप्रसङ्गे 'उपतिष्ठताम्' इति प्रयोक्तव्यम् ॥

शाङ्खायनः

अथात एकोद्दिष्टमेकपवित्रकमेकोऽर्घ एकः पिण्डो नाऽऽवाहनं नाऽग्नौकरणं नाऽत्र विश्वेदेवाः । स्वदितमिति तृप्तिप्रश्नः । उपतिष्ठतामित्यक्षय्यस्थाने । अभिरम्यतामिति विसर्गः । संवत्सरमेवं प्रेते ।

मत्स्यपुराणे

स्वदितं विकिरे ब्रूयाद्विसर्गे चाभिरम्यताम् ।

आश्वलायनगृह्यपरिशिष्टम्

अतस्त्वेकादशेऽहनि श्राद्धं तस्य विधीयते ।
एकोद्दिष्टं तु यच्छ्राद्धमसपत्नमिति स्थितिः ॥
सपिण्डीकरणमकृत्वा त्रिपक्षं परिशेषयेत ।
उच्छेषणं भूमिगतं विकिरं लेपमौदकम् ॥
अनुप्रेतेषु विसृजेदप्रजानामनायुषाम् ।
एकोद्दिष्टेषु सर्वेषु न स्वधा नाभिरम्यताम् ॥
नाग्नौकरणमन्त्रश्च एकश्चाथ तिलोदकम् ।
अनूद्दिश्य तु प्रेतस्य सर्वत्रैव प्रदीयते ॥
एकं पवित्रमेकोऽर्घ्य एकः पिण्डो विधीयते ।
अनपत्येषु सर्वेषु न स्वधा नाभिरम्यताम् ॥
स्वस्त्यस्तु विसृजेद्देवं सकृत्प्रणववर्जितः ।
एकोद्दिष्टस्य पिण्डे तु अनुशब्दो न युज्यते ॥

पितृशब्दं न कुर्वीत पितृहा चोपजायते ।

'असपत्नं' द्वितीयरहितम् । 'सपिण्डीकरणं कृत्वा' इत्यादेरयमर्थः—यः त्रिपक्षादर्वाक् अकृतसपिण्डीकरणः सः पक्षत्रये पूर्णे एकोद्दिष्टश्राद्धं कुर्यादिति ॥ 'अनूद्दिश्य तु प्रेतस्य' इति, यत्र कचिदकोद्दिष्टे पार्वणादौ प्रेतस्य उद्देशात उत्सृज्यते तत्र सर्वत्रैवमेवानुप्रेतेषूच्छेषणविकिरादिकं देयम् । 'न स्वधा' इति, स्वधावाचनं न कुर्यादित्यर्थः । 'स्वधा वाच्यतामिति विसृजेत्' इत्याश्वलायनोक्तान्तिमस्वधाकारनिषेधः । 'नाभिरभ्यतामि'ति प्रेतैकोद्दिष्टविषयम् । यत्तु शाङ्खायनवचनम् 'अभिरम्यतामिति विसर्ग' इति तदितरैकोद्दिष्टविषयम् । 'अनुशब्द' इति, अनुशब्दवान् 'ये

च त्वामनु' इत्यादिमन्त्रः 'पितृशब्दं न कुर्वीत' 'नमो वः पितर' इत्यादि मन्त्रं न पठेदित्यर्थः ॥

बृहस्पतिः [श्राद्ध, १२८, १३२, १३५, १३६, १३८]

एकोद्दिष्टविधानेन यद्देकस्य प्रदीयते ।
आवाहनाग्नौकरणरहितं दैववर्जितम् ॥
वस्त्रालंकारशय्याद्यं पितुर्यद्वाहनायुधम् ।
गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे तदर्पयेत् ॥
भोजनं चानेकविधं कारयेद्व्यञ्जनानि च ।
यथाशक्त्या प्रदद्याच्च गोभूहेमादिकं तथा ॥
श्रोत्रिया भोजनीयास्तु नव सप्त त्रयोदश ।
ज्ञातयो बान्धवा निःस्वास्तथा चातिथयोऽपरे ॥
प्रदद्याद्दक्षिणां तेषां सर्वेषामनुरूपतः ।
हतमश्रोत्रियं श्राद्धं हता यज्ञास्त्वदक्षिणाः ॥
तस्मात्पणं काकिणी वा फलं पुष्पमथापि वा ।
प्रदद्याद्दक्षिणां यज्ञे तया समफलो भवेत् ॥

वाराहपुराणे

एकादशाहे कर्तव्यं श्राद्धं प्रेताय यत्नतः ।
श्वः करिष्य इति ज्ञात्वा ब्राह्मणामन्त्रणक्रिया ॥
स्नात्वा चैव शुचिर्भूत्वा प्रेतं विप्रेषु योजयेत् ।
गतोऽसि दिव्यलोकं त्वं कृतान्तविहितात्पथः ॥
मनसा वायुभूतेन विप्रे त्वाहं नियोजये ।
पूजयिष्यामि भोगेन एवं विप्रं निमन्त्रयेत् ॥
अस्तं गते तथादित्ये गत्वा विप्रनिवेशनम् ।
दत्त्वा तु पाद्यं विधिवन्नमस्कृत्य द्विजोत्तमम् ॥
पादौ प्रक्षाल्य तैलेन प्रेतस्य हितकाम्यया ।
प्रभातायां तु शर्वर्यामुदिते च दिवाकरे ॥
श्मश्रुकर्म कारयित्वा नखच्छेदं ततः परम् ।

स्नपनाभ्यञ्जनं दद्याद्विप्राय विधिपूर्वकम् ॥
गृह्णीयाद्भूमिभागं च स्थण्डिलं तदनन्तरम् ।
निवापदेशं संगृह्य कर्तव्यं स्थण्डिलं महत् ॥
नदीकूले निवासे वा प्रेतभूमिं विनिर्दिशेत् ।
अकृत्वा पृथिवीभागं निवापं ये तु कुर्वते ॥
तदधीनं जगद्भद्रे तदुच्छिष्टं कृतं भवेत् ।
न देवाः पितरस्तस्य गृह्णन्तीह कदाचन ॥
पतन्ति निरये घोरे तेनोच्छिष्टेन सुन्दरि ।
सचैलस्नपनं कृत्वा गत्वा चैव महानदीम् ॥
तीर्थानि मनसा ध्यात्वा तैः स्वमभ्युक्षयेद्बुधः ।
एवं शुद्धिं ततः कृत्वा ब्राह्मणं शीघ्रमानयेत् ॥
आगतं च द्विजं दृष्ट्वा कर्तव्या स्वागतक्रिया ।
अर्घ्यं पाद्यं ततः कृत्वा हृष्टतुष्टेन माधवि ॥
आसनं चोपकल्पेत मन्त्रेण विधिपूर्वकम् ।
अत्रासने देवतानामनुज्ञातो विश्रम्यताम् ॥

प्रसादयेत्त्वासनं गृह्यपूतं
ज्ञानाग्निशुद्धेन करेण विप्रः ।
प्रक्षाल्य पाणी शिरसाऽभिवन्द्य
जानूनि विश्राव्य च मन्त्रवच्च ॥

उपवेश्यासने भद्रे छत्रं तत्र प्रकल्पयेत् ।
आवरणार्थं छत्रं तद्ब्राह्मणाय प्रदीयते ॥
पश्चादुपानहौ दद्यात् पादस्पर्शकरे उभे ।
सन्तप्तवालुकां भूमिमसिकण्टकितां तथा ॥
संतारयति दुर्गाणि प्रेतं दददुपानहौ ।
तिलोपचारं कृत्वा तु विप्रस्य नियतात्मना ॥
नाम गोत्रमुदाहृत्य प्रेताय तदनन्तरम् ।
शीघ्रमाह्वानयेद्भूमिं दर्भहस्तोऽथ भूतले ॥

'मन्त्रः'—

इह लोकं परित्यज्य गतोऽसि परमां गतिम् ।
एवमाहानिते गन्धपुष्पधूपान् समर्पयेत् ॥

'गन्धमन्त्रः'—'सर्वः सुगन्धः' । 'पुष्पमन्त्रः'—'श्रिया देव्या' । 'धूपमन्त्रो' 'बृहसातिरसान्' ।

ततो वस्त्राणि विप्राय सर्वाण्याभरणानि च ।
पुनः पक्वान्नकं चैव कल्पयेच्च वसुन्धरे ॥
त्रिषु वर्णेषु कर्तव्यं पाकं भोजनमेव च ।
शुश्रूषामभिपन्नानां शूद्राणां च वरानने ॥
दिने त्रयोदशे प्राप्ते पाकेन भोजयेद्द्विजान् ।
एवं विधिः प्रयोक्तव्यः शूद्राणां मन्त्रवर्जितः ॥
अमन्त्रस्य च शूद्रस्य विप्रो मन्त्रेण गृह्यते ।
भुज्यमानस्य विप्रेण प्रेतभागस्य सर्वशः ॥
ज्ञातिवर्गेषु मित्रेषु सम्बन्धिस्वजनेषु च ।
भागस्तस्य प्रदातव्यो येनार्थो यस्य विद्यते ॥
शुचिर्भूत्वा तु विधिवत् कृत्वा शान्त्युदकानि च ।
प्रणम्य शिरसा देवि निवापस्थानमागतम् ॥
स्तोतव्यानि च मन्त्राणि समभक्त्या व्यवस्थितम् ।

मन्त्रः—

नमो नमो मेदिनि लोकधात्रि
उर्वि महि शैलगिरिधारिणि धरणे नमः ।
धरणि काश्यपि जगत्प्रतिष्ठे
वसुधे नमोऽस्तु वैष्णवि भूतधात्रि ॥
नमोऽस्तु ते सर्वरसप्रतिष्ठे—
निवापनावीति नमो नमोऽस्तु ते ।
दद्यात्तिलोदकं तस्य नामगोत्रमुदाहरन् ॥

संवाह्य चरणौ तस्य नमस्कृत्य द्विजोत्तमम् ।
संगृह्य पाणिना पाणिं मन्त्रेणोत्थापयेद्द्विजम् ॥
दद्याच्छय्यासनं देवि तथैवाञ्जनकाङ्कतम् ।
अञ्जनं कङ्कतं गृह्य शय्यामाक्रम्य स द्विजः ॥
मुहूर्तं तत्र विश्रम्य पावनस्थानमागतम् ॥
गवां लाङ्गूलमुद्धृत्य ब्राह्मणो हस्तमादधत् ।
पात्र औदुम्बरे तत्र कृत्वा चैव तिलोदकम् ॥
उपाहरन्ति मन्त्रेण सामवेदाद्द्विजातयः ।
मन्त्रैः पूर्वं तदा तोयं सर्वपापप्रणाशनम् ॥
गृह्य चौदुम्बरं पात्रं विप्रेण नियतात्मना ।
मन्त्रेणाभ्युक्षयेत्सर्वं स्वगृहे यत्तु तिष्ठति ॥
देवांश्चाग्निमुखान् सर्वांस्तर्पयित्वा विभागशः ।
भूतानां च बलिं दद्याद्ब्राह्मणेभ्यश्च भोजनम् ॥
प्रेतभागेन दत्तेन पूजयित्वा द्विजातयः ।
मृतस्य नामतोद्दिश्य ह्यक्षयं चोपकल्पयेत् ॥
स्वस्ति वाच्य च विप्राय दद्यात्प्रेतविसर्जनम् ।
प्राशयेत् पञ्चगव्यं च मधुपर्केण संयुतम् ॥

श्रीरामायणे[1]

समतीते दशाहे तु कृतशौचो विधानतः ।
चक्रे द्वादशिकं श्राद्धं त्रयोदशिकमेव च ॥
यानानि दासदासीश्च वेश्मानि सुमहान्ति च ।
भूषणानि च मुख्यानि राज्ञस्तस्यौर्ध्वदैहिकम् ॥

राजधर्मेषु वसिष्ठः [१९, २९-३०]

राजनि च प्रेते दद्यात् प्रासङ्गिकम् । एतेन मातापितृ-
वृत्तिर्व्याख्याता ॥

1. Compare with the Madras Law Journal Press edition II, Lxxvii 1-3. Where the verses are cited in different language.

'प्रासङ्गिकं' प्रसङ्गो विषयोपभोगः, तदर्थं शय्यासनादि। 'मातापितृवृत्तिः' मातापित्रोरपि श्राद्धे प्रासङ्गिकशय्यादिदानेन वर्तितव्यमित्यर्थः ॥

विष्णुः [२०, १-११]

अथाऽऽशौचापगमे सुस्नातः सुप्रक्षालितपाणिपादः स्वाचान्तस्त्वेवंविधानेव च ब्राह्मणान् यथाशक्त्युदङ्मुखान् गन्धमाल्यवस्त्रालङ्कारादिभिः पूजितान् भोजयेत् । एकवन्मन्त्रानूहेदेकोद्दिष्टे । उच्छिष्टसन्निधावेकमेव तन्नामगोत्राभ्यां पिण्डं निर्वपेत् । भुक्तवत्सु ब्राह्मणेषु दक्षिणयाऽभिपूजितेषु प्रेतनामगोत्राभ्यां दत्ताक्षय्योदकेषु चतुरङ्गुलपृथ्वीस्तावदन्तरास्तावदधःखाता वितस्त्यायतास्तिस्रः कर्षूः कुर्यात् । कर्षूत्रयसमीपे चाग्नित्रयमुपसमाधाय परिस्तीर्य तत्रैकैकस्मिन्नाहुतित्रयं जुहुयात् । सोमाय पितृमते स्वधा नमः। अग्नये कव्यवाहनाय स्वधा नमः। यमायाङ्गिरसे स्वधा नमः। स्थानत्रये च प्राग्वत् पिण्डनिर्वपणं कुर्यात्। ततोऽन्नदधिमधुघृतमांसैः कर्षूत्रयं पूरयित्वा एतत्त इति जपेत्। एवं मृताहे प्रतिमासं कुर्यात् ॥

'एकवन्मन्त्रानूहेद्' इति, यत्र मन्त्रे बहुवचनान्तं पदं तत्रैकवचनान्तमूहनीयमित्यर्थः ॥

[1]याज्ञवल्क्यवृद्धशातातपौ

मृतेऽहनि तु कर्तव्यं प्रतिमासं तु वत्सरम् ।
प्रतिसंवत्सरं चैव माघमेकादशेऽहनि ॥

'एकादशेऽहनि' इत्याशौचापगमानन्तरदिवसोपलक्षणपरम्। अथाऽऽशौचव्यपगम इति विष्णुस्मरणात् ॥

(1) १, २५६

छन्दोगपरिशिष्टे कात्यायनः[1]

श्राद्धमग्निमतः कार्यं दाहादेकादशेऽहनि ।
[2]ध्रुवाणि तु प्रकुर्वीत प्रमीताहनि सर्वदा ॥
द्वादश प्रतिमास्यानि आद्यं षाण्मासिकं तथा ।
सपिण्डीकरणं चेति[3] प्रेतश्राद्धानि षोडश ॥
एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः ।
न्यूनाः संवत्सराच्चैव स्यातां षाण्मासिके तथा ॥

'अग्निमतो' मृतस्य । 'ध्रुवाणि' आवश्यकानि वक्ष्यमाणानि । 'संवत्सरान्न्यूना' इति सम्बन्धः ॥

ब्रह्मपुराणे

नृणां तु त्यक्तदेहानां श्राद्धाः षोडश सर्वदा ।
चतुर्थे पञ्चमे वाऽथ नवमैकादशे तथा ॥
ततो द्वादशभिर्मासैः श्राद्धा द्वादशसंख्यया ।
कर्तव्या शुचिभिस्तेषां तत्र विप्रांस्तु तर्पयेत् ॥

चतुर्थाहादिश्राद्धान्तराभावेनैकादशाहादिश्राद्धषोडशकाच्छ्राद्धषोडशकान्तरमेतत् ॥

दशदिनकृत्यसमनन्तरम्—

हारीतः

श्वोभूत एकानुदिष्टं प्रदाय स्वस्त्ययनादिधर्मार्थान् प्रवर्तयन्ति ॥

'एकानुद्दिष्टम्' एकस्योद्देशेन ।

(1) गोभिलस्मृतिः, ३, ६६–६८
(2) 'प्रत्याब्दिकं प्रकुर्वीत' इति आनन्दाश्रमकोशे, ६७
(3) 'चैव एतद्धि श्राद्धषोडशम्' इति तत्रैव

बैजवापः

ऊर्ध्वं दशम्यामपोऽभ्युपेत्य तस्मै श्राद्धकरणम् । गवाऽविनाऽजेन वा तस्य चैवाऽऽवृदष्टका ॥

'आवृदष्टका' यस्यामष्टकायां आवृतवपाहोमाद्याः ॥

पैठीनसिः

मृतस्य मासि मासि श्राद्धं कुर्यात् । संवत्सरान्ते विसर्जनम् । नवमास्यमित्येके ॥

देवलः

एकादशादिभिः श्राद्धे मृतस्याप्यायनं चरेत् ।
सम्यक् संवत्सरे पूर्णे पितॄणां स्थानमृच्छति ॥

हारीतः

मृते पितरि वै पुत्रः पिण्डमब्दे समाचरेत् ।
अन्नं कुम्भं च विप्राय प्रेतनिर्देशधर्मतः ॥

याज्ञवल्क्यः [१, २५५]

अर्वाक् सपिण्डीकरणं यस्य संवत्सराद्भवेत् ।
तस्याप्यन्नं सोदकुम्भं [1]दद्याद्वर्षे द्विजन्मने ॥

प्रेताधिकारे पारस्करः [३, १०, ५४-५५]

अहरहरन्नमस्मै ब्राह्मणायोदकुम्भं च दद्यात् । पिण्डमप्येके निगृह्णन्ति[2] ॥

(1) 'दद्यात्संवत्सरं द्विजे' इति मिताक्षरापाठः.

(2) 'निपृणन्ति' इति चौखाम्बामुद्रितपारस्करीये (पृ. ६४८) 'निपृणन्ति' इच्छन्ति ।

## ॥ २८ ॥

## ॥ अथ सपिण्डीकरणम् ॥

तत्र शातातपः

संवत्सरे तु विज्ञेयं सपिण्डीकरणं त्विह ।
सपिण्डीकरणान्ता च ज्ञेया प्रेतक्रिया बुधैः ॥
सपिण्डीकरणं श्राद्धं दैवपूर्वं नियोजयेत् ।
पितॄनेवाशयेत्तत्र पुनः प्रेतं च निर्दिशेत् ॥
निरूप्य चतुरः पिण्डान् पिण्डदः प्रतिनामतः ।
ये समानामिति द्वाभ्यामाद्यं तु विभजेत् त्रिधा ॥
एक एव विधिः पूर्वमर्घपात्रचतुष्टये ।
आसिञ्चेत्पितृपात्राणि प्रेतपात्रेण मन्त्रवित् ॥

'प्रेतक्रिया' प्रेतशब्दोल्लेखनया या क्रिया सा क्रियते । तेन सपिण्डीकरणापकर्षपक्षेऽप्युदकुम्भदाने प्रेतशब्दोल्लेखो न कार्य इति । 'पितॄनेव' न तु मातामहादीन् । 'आद्यं' प्रेतपिण्डम् ॥

आश्वलायनपरिशिष्टम्[1]

अथ सपिण्डीकरणम् । चत्वार्युदपात्राणि । एकं मृतस्य । त्रीणीतरेषाम् । प्रथमं पात्रं त्रिषु पात्रेषु नियोजयेत् । समानीव आकूतिरित्येवमेव प्रथमं पिण्डं त्रिषु पिण्डेषु नियोजयेत् । मधुमतीभिः संगच्छध्वमिति द्वाभ्याम् । एवं चतुर्थोऽनुज्ञापितो भवति । न चात्र दैवं भोजयेत् । प्रागेव दैवेऽर्घमन्नाद्यं च दत्त्वा गन्धमाल्यैः पात्रमर्चयित्वा हुतशेषं पितृभ्यः पाणिषु दद्यात् । पुनस्तद्देव च ॥

अन्नं पाणितले दत्तं पूर्वमश्नन्त्यबुद्धयः ।
पितरस्तेन तृप्यन्ति सर्वं न प्राप्नुवन्ति च ॥
यच्च पाणितले दत्तं यच्चान्नमुपकल्पितम् ।
एकीभावेन भोक्तव्यं पृथग्भागो न विद्यते ॥

'अनुज्ञपितो' विसर्जितः । 'न चात्र' इति, पित्रादीनामासनदानादिपदार्थकाण्डे देवासनादिपदार्थसंकरं न कुर्यादित्यर्थः । 'हुतशेषं' अग्नौकरणहोमावशिष्टम् ॥

विष्णुः [२१,१२-२१]

संवत्सरान्ते प्रेताय तत्पित्रे तत्पितामहाय च तत्प्रपितामहाय ब्राह्मणान् भोजयेत् । अग्नौकरणमावाहनं पाद्यं च कुर्यात् । संसृजतु [त्वा] पृथिवी समानी व इति प्रेतपाद्यपात्रे [पितृपात्र]त्रये योजयेत् । उच्छिष्टसन्निधौ पिण्डचतुष्टयं कुर्यात् । ब्राह्मणांश्च स्वाचान्तान् दत्तदक्षिणाननुव्रज्य विसर्जयेत् । ततः पिण्डमर्घपात्रोदकवत् पिण्डत्रये निदध्यात् । कर्षूत्रयसन्निकर्षेऽप्येवमेव । एवं सपिण्डीकरणं मासिकार्थवद्द्वादशाहं श्राद्धं कृत्वा त्रयोदशेऽह्नि वा कुर्यात् । मन्त्रवर्जं हि शूद्राणां द्वादशेऽह्नि । संवत्सराभ्यन्तरे यद्यधिकमासो भवेत्तदा मासिकार्थे दिनमेकं वर्धयेत् ॥

'कर्षूत्रयसन्निकर्षेऽप्येवम्' इति, प्रेतैकोद्दिष्टसंबन्धिकर्षूत्रयसन्निहितानपि पिण्डान् पित्रादिपिण्डेषु संसृजेत् । 'मासिकार्थवत्' मासि भवानि श्राद्धानि 'मासिकानि', तदर्थः प्रेताप्यायनादिः, तेन युक्तानि श्राद्धानि मासिकार्थानि । आशौचापगमे 'द्वादशाहं' द्वादशाहस्तु कृत्वात्र त्रयोदशेऽह्नि सपिण्डीकरणं कुर्यात् । आद्यं

चैकोद्दिष्टमाशौचान्त एव कृतम् । ऊनषाण्मासिकोनादिकोऽपि षष्ठद्वादशदिवसयोरेव कर्तव्ये। एवमेतस्मिन् पक्षे षोडशश्राद्धानि भवन्ति । एतच्च साग्नेर्निरग्नेश्च वृद्ध्यादावपकर्षनिमित्ते सति बोद्धव्यम् । वृद्धेश्च सपिण्डीकरणापकर्षनिमित्तत्वम् "अर्वाक् संवत्सराद्वृद्धौ पूर्णे संवत्सरेऽपि वा। ये सपिण्डीकृताः प्रेताः" इति शातातपवाक्येऽनुवाददर्शनाज्ज्ञातव्यम् ॥

पैठीनसिः

संवत्सरान्ते विसर्जनं नवमास्यमित्येके ।

अयं च सपिण्डीकरणे नवमासविधिर्दशममासादौ वृद्धिश्राद्धनिमित्तसंभवे बोद्धव्यः। न ततोऽर्वाक् सपिण्डीकरणं कर्तव्यम् ॥

बैजवापः

अथ सपिण्डीकरणम् । संवत्सरमेकं पिण्डमनुद्दिश्य समाप्ते संवत्सरे चत्वार्युदपात्राणि संयुनक्ति। तथैकं प्रेताय त्रीन् पितृभ्यः । तत्प्रेतपात्रं पितृपात्रेषु सिञ्चति । ये समाना इति द्वाभ्यामेवमेव पिण्डान् यथा विमृशति।

एष वोऽनुगतः प्रेतः पितरस्तं ददामि वः।
शिवमस्त्विति शेषाणां जायन्तां चिरजीविनः ॥
समानीव आकूतिः समाना हृदयानि वः।
समानमस्तु वो मनो यथा वस्सुसहासति ॥
संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्।
देवा भागं यथा पूर्वे संजानाना उपासते ॥ इति ।

अभिशस्तपतितभ्रूणघ्नान् स्त्रीं च व्यभिचारिणीं नातिदिशेत् ॥

हारीतः

समाप्ते तु पशुश्राद्धं विधिवत्प्रतिपादयेत् ।
चतुरो निर्वपेत् पिण्डान् प्रथमं तेषु निर्वपेत् ॥
वपां पशूंश्चरुं चैव ह्यवदानानि यानि च ।
हुत्वा नीतिविधानेन शेषान्पिण्डान्समावपेत् ॥
ततः प्रभृति वै प्रेतः पितृसामान्यमाप्नुयात् ।
विन्दते पितृलोकं च ततः श्राद्धं प्रवर्तते ॥
विधिना सन्नियुक्तस्य यावल्लोमानि वै पशोः ।
तावद्वर्षसहस्राणि पितॄणामक्षयं भवेत् ॥
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ।
सर्वकामैश्च बध्नाति पशुयाजी न संशयः ॥

ब्रह्मपुराणे

चतुर्भ्यश्चार्घपात्रेभ्य एकं वामेन पाणिना ।
गृहीत्वा दक्षिणेनैव पाणिना च तिलोदकम् ॥
संसृजतु त्वा पृथिवी ये समाना इति स्मरन् ।
प्रेतविप्रस्य हस्ते तु चतुर्भागं जलं क्षिपेत् ॥
ततः पितामहादिभ्यस्तत्तन्मन्त्रैः पृथक् पृथक् ।
ये समाना इति द्वाभ्यां तज्जले तु समर्पयेत् ॥
अर्घस्तेनैव विधिना पात्राच्च विधिपूर्वकम् ।
तेभ्यश्चार्घं निवेद्यैव पश्चाच्च स्वयमाचरेत् ॥
अथ तेनैव विधिना दर्भमूलेऽवनेजनम् ।
पितुर्दत्वा च पिण्डं तु दद्याद्भक्त्या तु पूर्ववत् ॥
दत्वा पिण्डमथाष्टाङ्गं ध्यात्वा तं च सुभास्वरम् ।
सुवर्णरूप्यदर्भैस्तु तस्मिन् पिण्डं ततस्त्रिधा ॥
कृत्वा पितामहादिभ्यः पितृभ्यः प्रेनमर्पयेत् ।
संसृजतु त्वा पृथिवी वायुरग्निः प्रजापतिः ॥
एतन्मन्त्रं जपेद्भक्त्या समानीवन्तमेव च ।

ये समाना इति द्वाभ्यां पितृभ्यः प्रेतमर्चयेत् ॥
वर्तुलांस्तु ततस्तांस्त्रीन् पिण्डान् कृत्वा प्रपूजयेत् ।
अर्घपुष्पैस्तथा धूपैर्दीपमाल्यानुलेपनैः ॥
मुख्यं तु पितरं कृत्वा पुनस्त्वन्यान्यथाक्रमम् ।
मृते पितरि यस्याथ विद्यते च पितामहः ॥
तेन देयास्त्रयः पिण्डाः प्रपितामहपूर्वकाः ।
तेभ्यश्च पैतृकः पिण्डो नियोक्तव्यस्तु पूर्ववत् ॥
मातर्यथ मृतायां तु विद्यते च पितामही ।
प्रपितामहिपूर्वस्तु कार्यस्तत्राप्ययं विधिः ॥

जाबालः

नासपिण्डाग्निमान् पुत्रः पितृयज्ञं समाचरेत् ।
पापी भवत्यकुर्वन् हि पितृहा चोपजायते ॥

अयमर्थः । अशौचानान्तरमागामिनि दर्शेऽवश्यं-कर्तव्यपिण्डपितृयज्ञश्राद्धं मासिकश्राद्धपूर्वकं सपिण्डीकरणं कृत्वैव कुर्यात् ॥

याज्ञवल्क्यः [१, २५३-२५४]

गन्धोदकतिलैर्युक्तं कुर्यात् पात्रचतुष्टयम् ।
अर्घार्थं पितृपात्रे तु प्रेतपात्रं प्रसेचयेत् ॥
ये समाना इति द्वाभ्यां शेषं पूर्ववदाचरेत् ।
एतत्सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि ॥

'स्त्रिया अपि' 'एकोद्दिष्टम्' एकादशाहादि 'सपिण्डीकरणं' चैवमेव कर्तव्यमित्यर्थः ।

वृद्धशातातपः

भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्ट एव च ।
सहपिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः ॥

विष्णुः [२१, २२]

सपिण्डीकरणं स्त्रीणां कार्यमेव यथा भवेत् ।
यावज्जीवं तथा कुर्याच्छ्राद्धं तु प्रतिवत्सरम् ॥

वृद्धशातातपः

मातुः सपिण्डीकरणं कथं कार्यं सुतैर्भवेत् ।
पितामह्या सहैवास्याः सपिण्डीकरणं स्मृतम् ॥

छन्दोगपरिशिष्टे कात्यायनः [गोभिल, २, १०२]

मातुः सपिण्डीकरणं पितामह्या सहोदितम् ।
यथोक्तेनैव कालेन पुत्रिकाया न चेत् सुतः ॥

अस्यार्थः—पुत्रेण मातुः सपिण्डीकरणं पितामह्यादिभिः सह कर्तव्यम् । पुत्रिकापुत्रेण मातामहादिभिः सह ॥

[1]बौधायनयज्ञपार्श्वौ

आदिशेत्प्रथमे पिण्डे मातरं पुत्रिकासुतः ।
द्वितीये पितरं तस्यास्तृतीये च पितामहम् ॥

शातातपो, वृद्धशातातपश्च द्वितीये

अप्रत्तायां पिता कुर्यात् प्रत्तायां तु पतिस्तथा ।
स्वेन स्वेनैव गोत्रेण संस्थितायां तिलोदकम् ॥
संस्थितायां तु भार्यायां सपिण्डीकरणान्तिकम् ।
पैतृकं भजते गोत्रमूर्ध्वं तु पतिपैतृकम् ॥
एकमूर्तित्वमायाति सपिण्डीकरणे कृते ।
पत्नीपतिपितॄणां तु तस्मात्तद्गोत्रभागिनी ॥
सपिण्डीकरणादूर्ध्वं यत्पितृभ्यः प्रदीयते ।
सर्वेष्वंशहरा माता इति धर्मेषु निश्चयः ॥

(1) बौ. ध. सू., २, ३, १६

'संस्थितायां' मृतायाम्। 'तिलोदकम्' इत्यौर्ध्वदेहिकमात्रोपलक्षणम्। पितृगोत्रभाजनं चासुरादिनिन्दितविवाहोढाविषयमिति स्मृतिमञ्जरीकारप्रभृतयः[1]। 'ऊर्ध्वं तु पतिपैतृकम्' इत्यत्र हेतुः 'एकमूर्तित्वम्' इत्यादि। 'सपिण्डीकरणादूर्ध्वम्' इत्यनेन पित्राद्युद्देशेनैव व्यज्यमाने द्रव्ये 'माता' 'अंशहरा' तृप्तिभागिनी भवतीत्युक्तम्॥

बृहस्पतिः [श्राद्ध., ८९, २९, २६]

स्वेन भर्त्रा समं श्राद्धं माता भुङ्क्ते [2]स्वधामयम्।
पितामही च स्वेनैव तथैव प्रपितामही॥
भर्तृगोत्रेण दातव्यं स्त्रीणां पिण्डोदकं सुतैः।
पितामहपितृभ्यां च स्वेन स्वेन विधानतः॥
पाणिग्रहणिका मन्त्राः पितृगोत्रापहारकाः।
भर्तृगोत्रेण नारीणां देयं पिण्डोदकं ततः।
चतुर्थीहोममन्त्रेण त्वङ्मांसहृदयेन्द्रियैः॥
भर्त्रा संयुज्यते पत्नी तद्गोत्रा तेन सा भवेत्।

विष्णुः [७४,१-८]

अष्टकासु दैवपूर्वं शाकमांसापूपकैः श्राद्धं कृत्वा त्वन्वष्टकास्वष्टकावद्वह्नौ हुत्वा दैवपूर्वमेवं मात्रे पितामह्यै प्रपितामह्यै च पूर्ववद्ब्राह्मणान् भोजयित्वा दक्षिणाभिश्चाभ्यर्च्यानुव्रज्य विसर्जयेत्। ततः षट्कर्षूः कुर्यात्। तन्मूले च प्रागुदगग्न्युपसमाधानं कृत्वा हुत्वा च पिण्डत्रयनिर्वपणं प्रत्येकस्मिन् कर्षूमूले कुर्यात्[3]। कर्षूत्रये पुरुषाणां कर्षूत्रये स्त्रीणाम्। पुरुषकर्षूत्रयं सान्नेनोदकेन

(1) स्मृतिमञ्जरी a work by गोविन्दराज
(2) 'सदैवकम्' इति स्मृतिचन्द्रिकापाठः (श्राद्ध., p. 98)
(3) Sūtra wanting in Jolly's ed. p. 166

पूरयेत्। स्त्रीकर्षूत्रयं सान्नेन पयसा। दध्ना मांसेन पयसा प्रत्येकं कर्षूत्रयम्। पूरयित्वा जपेदेतद्भवद्भ्यो भवतीभ्योऽस्तु चाक्षयम्॥

'स्त्रीकर्षूत्रयं सान्नेन पयसा' पूरयेदित्यर्थः। 'दध्ना मांसेन पयसा प्रत्येकं कर्षूत्रयं' पूरयेदित्यपरः॥

छन्दोगपरिशिष्टे कात्यायनः [गोभिल, २,१०३]

न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते।
स्वभर्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता॥

तथा[1]

पितामहः पितुः पश्चात् पञ्चत्वं यदि गच्छति।
पौत्रेणैकादशाहादि कर्तव्यं श्राद्धषोडशम्॥
नैतत्पौत्रेण कर्तव्यं पुत्रवांश्चेत्पितामहः।
पितुः सपिण्डतां कृत्वा कुर्यान्मासानुमासिकम्॥
असंस्कृतौ न संस्कार्यौ पूर्वौ पौत्रप्रपौत्रकैः।
पितरं तत्र संस्कुर्यादिति कात्यायनोऽब्रवीत्॥
पापिष्ठमपि शुद्धेन शुद्धं पापकृतापि वा।
पितामहेन पितरं संस्कुर्यादिति निश्चयः॥

'पूर्वौ' पितामहप्रपितामहौ यत्र केनापि निमित्तेन 'असंस्कृतौ' अकृतसपिण्डीकरणौ, तत्रापि ताभ्यां सह 'पितरं संस्कुर्यात्' सपिण्डयेदित्यर्थः॥

इति भट्टश्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ श्राद्धकाण्डे सपिण्डीकरणपर्व॥

(1) गोभिलस्मृतिः, २, ९७–१००.

## ॥ २९ ॥

## ॥ अथ सपिण्डीकरणोत्तरश्राद्धम् ॥

तत्र शातातपः

प्रदानं यत्र यत्रैषां सपिण्डीकरणात्परम् ।
तत्र पार्वणवच्छ्राद्धं ज्ञेयमभ्युदयादृते ॥
अर्वाक् संवत्सराद्वृद्धौ पूर्णे संवत्सरेऽपि वा ।
ये सपिण्डीकृताः प्रेता न तेषां तु पृथक्क्रिया ॥
पृथक् पिण्डप्रदानं तु तस्मादूर्ध्वं विधीयते ।
प्रेतानामिह सर्वेषां ये मन्त्रैस्तु नियोजिताः ॥
कृतार्थास्ते हि संवृत्ताः सपिण्डीकरणे कृते ।
प्रेतत्वाच्चेह निस्तीर्णाः प्राप्ताः पितृगणं तु ये ॥
यः सपिण्डीकृतं प्रेतं पृथक् पिण्डे नियोजयेत् ।
विधिघ्नस्तेन भवति पितृहा चोपजायते ॥

'पृथक् पिण्डे', पृथक् इतरपिण्डासहभावेन पिण्डो यत्र दीयते एकोद्दिष्टे, तस्मिन् 'नियोजयेत्' देवतात्वेनेति शेषः ॥

जाबालः

पितृयज्ञं तु निर्वर्त्य मासिकं श्राद्धमेव च ।
श्राद्धं प्रति रुचौ चैव मातापित्रोर्मृतेऽहनि ॥
असपिण्डीकृतं प्रेतमेकोद्दिष्टेन तर्पयेत् ।
सपिण्डीकरणादूर्ध्वं त्रिभिः सामान्यमिष्यते ॥
औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन तु ।
प्रत्यब्दमितरे कुर्युरेकोद्दिष्टं सुता दश ॥

'पितृयज्ञः' अत्र पितृतर्पणम् ।

याज्ञवल्क्यः [१, २५६]

मृतेऽहनि तु कर्तव्यं प्रतिमासं च वत्सरम् ।
प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि ॥

मत्स्यपुराणे

ततः प्रभृति संक्रान्तावुपरागादिपर्वसु ।
त्रिपिण्डमाचरेच्छ्राद्धमेकोद्दिष्टं मृताहनि ॥
एकोद्दिष्टं परित्यज्य पार्वणं यः समाचरेत् ।
सदैव पितृहा स स्यान्मातृभ्रातृविनाशकः ॥
मृताहे पार्वणं कुर्वन्नधोऽधो याति मानवः ।
संपृक्तेष्वाकुलीभावः प्रेतेषु च ततो भवेत् ॥

तथा

यत्र यत्र प्रदातव्यं सपिण्डीकरणात्परम् ।
पार्वणेन विधानेन देयमग्निमता सदा ॥

अत्र च प्रत्यब्दं मृताहनि पार्वणैकोद्दिष्टयोस्तुल्यवद्विकल्पे प्राप्ते व्यवस्थितिर्यथा—औरसः क्षेत्रजश्च यः साग्निः प्रत्यब्दं पार्वणमेव कुर्यात् । "औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन तु" इति जाबालवचनात् ॥

यत्र यत्र प्रदातव्यं सपिण्डीकरणात्परम् ।
पार्वणेन विधानेन देयमग्निमता सदा ॥

इति मत्स्यपुराणवचनाच्च । निरग्निकौ त्वौरसक्षेत्रजौ, इतरे तु पुत्राः साग्नयो निरग्नयश्च प्रत्यब्दं मृताहन्येकोद्दिष्टमेव कुर्युरिति महार्णवप्रकाशकारः ॥

## ॥ ३० ॥

## ॥ अथ श्राद्धाधिकारिणः ॥

तत्र मरीचिः

> मृते पितरि पुत्रेण क्रिया कार्या विधानतः ।
> बहवः स्युर्यदा पुत्राः पितुरेकत्र वासिनः ॥
> सर्वेषां तु मतं कृत्वा ज्येष्ठेनैकेन यत्कृतम् ।
> द्रव्येण चाऽविभक्तेन सर्वैरेव कृतं भवेत् ॥

शङ्खलिखितौ

> यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्धनाः ।
> एकपिण्डाः पृथक् शौचाः पिण्डस्त्वावर्तते त्रिषु ॥

'पृथक्क्षेत्राः' विजातीयमातृजाताः । 'एकपिण्डाः' एकमेव पिण्डं दद्युः, न पुनः प्रतिपुरुषं पृथक् पिण्डदानम् । 'पृथक्शौचाः' विजातीयमातृसंम्बन्धेन पृथक्शुद्धयः । 'पिण्डस्त्वावर्तते त्रिषु' सपिण्डता तु त्रिपुरुषेषु भवतीत्यर्थः ॥

पैठीनसिः

यावत् त्रिपुरुषमविच्छिन्नं तावत्पिण्डः प्रदीयते । त्रिपुरुषविनाशे तु पृथक् पिण्डोदकक्रिया ॥

'अविच्छिन्नं' विजातीयपुरुषसंप्रवेशेन जीवनेन च पतितत्वेन च विच्छेदरहितम् । 'त्रिपुरुषविनाशे' विजातीय-क्षत्रियादिप्रवेशेन ॥

बृहस्पतिः [श्राद्ध; १५०]

प्रमीतस्य पिण्डं[1] पुत्रैः श्राद्धे देयं प्रयत्नतः ।
ज्ञातिबन्धुसुहृच्छिष्यैर्ऋत्विग्भृत्यपुरोहितैः ॥

अत्र च पुत्रादिपूर्वपूर्वाभाव उत्तरोत्तराधिकारो बोद्धव्यः ॥

गौतमः [१५, १३-१४]

पुत्राभावे सपिण्डा मातृसपिण्डा शिष्याश्च दद्युः । तदभावे ऋत्विगाचार्यौ ॥

विष्णुपुराणे [३, १३, ३१-४०]

पुत्रः पौत्रः प्रपौत्रो वा तद्वद्वा [2]भ्रातृसन्ततिः ।
सपिण्डसन्ततिर्वापि क्रियार्हा नृप जायते ॥
तेषामभावे सर्वेषां समानोदकसन्ततिः ।
[3]मातृपक्षस्य पिण्डेन संबन्धो यो जलेन वा ॥
कुलद्वयेऽपि चोच्छिन्ने स्त्रीभिः कार्याः क्रिया नृप ।
सङ्घातान्तर्गतैर्वापि कार्याः [4]प्रेतस्य या क्रियाः ॥
[5]उच्छिन्नबन्धुरिक्थाद्वा कारयेदवनीपतिः ।
पूर्वाः क्रिया मध्यमाश्च तथा चैवोत्तराः क्रियाः ॥
त्रिप्रकाराः क्रिया [6]ह्येता संस्थाभेदान् शृणुष्व मे ।
आदाहाद्वार्यायुधादिस्पर्शादन्त्याश्च याः क्रियाः ॥
ताः पूर्वा मध्यमा मासि मास्येकोद्दिष्टसंज्ञिताः ।
प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु ॥

(1) 'पितुः' इति पराशरमाधवीयपाठः (आ., ४६१)
(2) 'भ्राता वा' इति गोरखपुरकोशे (पृ. २४५)
(3) 'मातृपक्षसापिण्डेन' इति पाठः
(4) 'प्रेतस्य च क्रियाः' इति पाठः
(5) 'उत्सन्नबन्धु' इति पाठः
(6) 'सर्वास्तासां भेदं शृणुष्व मे' इति पाठः

क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते ता नृपोत्तराः ।
पितृमातृसपिण्डैस्तु समानसलिलैस्तथा ॥
सङ्घातान्तर्गतैश्चैव[1] राज्ञा वा [2]धनहारिणा ।
पूर्वाः क्रियास्तु कर्तव्याः पुत्राद्यैरेव चोत्तराः ॥
दौहित्रैर्वा [3]नरश्रेष्ठ कार्यास्तत्तनयैस्तथा ।
मृताहनि तु कर्तव्याः स्त्रीणामप्युत्तराः क्रियाः ॥
प्रतिसंवत्सरं राजन्नेकोद्दिष्टविधानतः ।

'मातृपक्षस्य पिण्डेन संबन्धः' मातृसपिण्डतः, 'मातृपक्षस्य जलेन संबन्धो' मातृसमानोदकतः । 'उत्सन्नबन्धुरिक्थात्' उत्सन्ना बन्धवो यस्य स तथा, तस्य 'रिक्थात्'। 'आदाहाद्वार्यायुधादिस्पर्शादन्त्यादि', 'अन्त्याः' अन्तो मरणं, तत्र भवाः, ताश्च दाहोपक्रमा वार्यायुधादिस्पर्शपर्यन्ताः पूर्वा इत्यर्थः । 'मासि मासि' इत्येकादशाहादिसपिण्डीकरणपूर्वप्रेतक्रियोपलक्षणम् । अत्र च पितृमातृसपिण्डादयः पूर्वक्रियामेव कुर्युर्नोत्तराम् । मध्यमक्रियायां त्वेषामनियमः । उत्तरक्रियायां तु पुत्राद्या भाविसन्ततिपर्यन्ता दौहित्रास्तत्तनयाश्च नियताः । 'दौहित्रैः' 'तत्तनयैः' इति च पुत्रिकापुत्रविषयम् ॥

ब्रह्मपुराणे

न कदाचित्सगोत्राय श्राद्धं कार्यमगोत्रजैः ।
असमाप्तव्रतस्यापि कर्तव्यं ब्रह्मचारिणः ॥
श्राद्धादि मातापितृभिर्न तु तेषां करोति सः ।
नित्यं गुरुकुलस्थस्य गुरुः सब्रह्मचारिणः ॥

(1) 'गतैर्वापि' इति पाठः
(2) 'तद्धनहारिणा' इति पाठः
(3) 'नृपश्रेष्ठ' इति पाठः

